त्रयं इमे लोका इमानेव लोकानभि जयति त्रिरुत्तराध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभि जयति त्रिरुप वाजयति त्रयो वै देवलोका देवलोकानेवाभि जयति द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्या आघारमा घारयति तिर इव वै सुवर्गो लोकः सुवर्गमेवास्मै लोकम्प्र रोचयत्यृजुमा घारयत्यृजुरिव हि प्राणः संततमा घारयति प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याघारयेत्प्राणमेवास्माज्जिह्मं नयति ताजक्प्र मीयते शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवाघारमाघार्य ध्रुवाँ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधात्यग्निर्देवानां दूत आसीद्दैव्योऽसुराणां तौ प्रजापतिम्प्रश्नमैताँ स प्रजापतिर्ब्राह्मणमब्रवीदेतद्वि ब्रूहीत्या श्रावयेतीदं देवाः शृणुतेति वाव तदब्रवीदग्निर्देवो होतेति य एव देवानां तमवृणीत ततो देवा अभवन्परासुरा यस्यैवं विदुषः प्रवरम्प्रवृणते भवत्यात्मना परास्य भ्रातृव्यो भवति यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातांब्राह्मणायाधि ब्रूयाद्यद्ब्राह्मणायाध्याहात्मनेऽध्याह यद्ब्राह्मणम्पराहात्मानम्पराह तस्माद्ब्राह्मणो न परोच्यः ॥११॥

आयुष्ट आयुर्दा अग्न आ प्यायस्व सं तेऽव ते हेड उदुत्तमं प्र णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू इमं मे वरुण तत्त्वा याम्युदु त्यं चित्रम् ॥ अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः । तस्य ज्येष्ठम्महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः ॥ समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति । तमू शुचिँ

शुचयो दीदिवाँसमपां नपातम्परि तस्थुरापः ॥
तमस्मेरा युवतयो युवानम्मर्मृज्यमानाः परि यन्त्यापः । स शुक्रेण
शिक्वना रेवदग्निर्दीदायानिध्मो घृतनिर्णिगप्सु ॥
इन्द्रावरुणयोरहँ सम्राजोरव आ वृणे । ता नो मृडात ईदृशे ॥
इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥
आ नो मित्रावरुणा प्र बाहवा त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽव
यासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाँसि प्र
मुमुग्ध्यस्मत् ॥
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व
नो वरुणँ रराणो वीहि मृडीकँ सुहवो न एधि ॥
प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः । अभि यः
पूरुम्पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥
प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु । धन्वन्निव प्रपा
असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥
वि पाजसा वि ज्योतिषा ॥
स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः । उरुक्षयेषु दीद्यत् ॥
तँ सुप्रतीकँ सुदृशँ स्वञ्चमविद्वाँसो विदुष्टरँ सपेम । स
यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ॥
अँहोमुचे विवेष यन्मा वि न इन्द्रेन्द्र क्षत्रमिन्द्रियाणि शतक्रतोऽनु ते
दायि ॥१२॥

इति द्वितीयकाण्डे पञ्चमः प्रपाठकः ५

## अथ द्वितीयकाण्डे षष्ठः प्रपाठकः ६

समिधो यजति वसन्तमेवर्तूनामव रुन्द्धे तनूनपातं यजति ग्रीष्ममेवाव रुन्द्ध इडो यजति वर्षा एवाव रुन्द्धे बर्हिर्यजति शरदमेवाव रुन्द्धे स्वाहाकारं यजति हेमन्तमेवाव रुन्द्धे तस्मात्स्वाहाकृता हेमन्पशवोऽव सीदन्ति समिधो यजत्युषस एव देवतानामव रुन्द्धे तनूनपातं यजति यज्ञमेवाव रुन्द्ध इडो यजति पशूनेवाव रुन्द्धे बर्हिर्यजति प्रजामेवाव रुन्द्धे समानयत उपभृतस्तेजो वा आज्यम्प्रजा बर्हिः प्रजास्वेव तेजो दधाति स्वाहाकारं यजति वाचमेवाव रुन्द्धे दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्द्धे समिधो यजत्यस्मिन्नेव लोके प्रति तिष्ठति तनूनपातं यजति यज्ञ एवान्तरिक्षे प्रति तिष्ठतीडो यजति पशुष्वेव प्रति तिष्ठति बर्हिर्यजति य एव देवयानाः पन्थानस्तेष्वेव प्रति तिष्ठति स्वाहाकारं यजति सुवर्ग एव लोके प्रति तिष्ठत्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वम्प्रति तिष्ठति देवासुरा एषु लोकेष्वस्पर्धन्त ते देवाः प्रयाजैरेभ्यो लोकेभ्योऽसुरान्प्राणुदन्त तत्प्रयाजानां प्रयाजत्वं यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान्नुदतेऽभिक्रामं जुहोत्यभिजित्यै यो वै प्रयाजानाम्मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बह्वीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानाम्मिथुनं य एवं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते देवानां वा अनिष्टा देवता आसन्नथासुरा यज्ञमजिघाँसन्ते देवा गायत्रीं व्यौहन्पञ्चाक्षराणि प्राचीनानि त्रीणि प्रतीचीनानि ततो वर्म यज्ञायाभवद्वर्म यजमानाय यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथम्पुरस्ताद्वर्षीयः पश्चाद्ध्रसीयो देवा वै पुरा

रक्षोभ्य इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन्तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन्वि वा एतद्यज्ञं छिन्दन्ति यत्स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभि घारयति यज्ञस्य संतत्या अथो हविरेवाकरथो यथापूर्वमुपैति पिता वै प्रयाजाः प्रजानूयाजा यत्प्रयाजानिष्ट्वा हवीꣳष्यभिघारयति पितैव तत्पुत्रेण साधारणं कुरुते तस्मादाहुर्यश्चैवं वेद यश्च न कथा पुत्रस्य केवलं कथा साधारणम्पितुरित्य स्कन्नमेव तद्यत्प्रयाजेष्विष्टेषु स्कन्दति गायत्र्यैव तेन गर्भं धत्ते सा प्रजाम्पशून्यजमानाय प्र जनयति ॥१॥

चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति पूर्वार्धे जुहोति तस्मात्पूर्वार्धे चक्षुषी प्रबाहुग्जुहोति तस्मात्प्रबाहुक्चक्षुषी देवलोकं वा अग्निना यजमानोऽनु पश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै राजानौ वा एतौ देवतानां यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै तस्माद्राज्ञा मनुष्या विधृता ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येनान्यतोदतश्च पशून्दाधारोऽभयतोदतश्चेत्यृचमनूच्याज्यभागस्य जुषाणेन यजति तेनान्यतोदतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार मूर्धन्वती पुरोऽनुवाक्या भवति मूर्धानमेवैनꣳ समानानां करोति नियुत्वत्या यजति भ्रातृव्यस्यैव पशून्नि युवते केशिनꣳ ह दार्भ्यं केशी सात्यकामिरुवाच सप्तपदां ते शक्वरीꣳ श्वो यज्ञे प्रयोक्तासे यस्यै वीर्येण प्र जातान्भ्रातृव्यान्नुदते प्रति जनिष्यमाणान्यस्यै वीर्येणोभयोर्लोकयोर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धेनानड्वान्भुनक्ति

जघनार्धेन धेनुरिति पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति जातानेव भ्रातृव्यान्प्र णुदत उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रति नुदते पुरस्ताल्लक्ष्मा पुरोऽ नुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्यामुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति तस्मात्पूर्वार्धेनानड्वान्भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ वज्र आज्यं वज्र आज्यभागौ वज्रो वषट्कारस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरत्यच्छम्बट्कार मपगूर्य वषट्करोति स्तृत्यै गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या ब्रह्मन्नेव क्षत्रमन्वारम्भयति तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद प्रैवैनम्पुरोऽनुवाक्ययाह प्र णयति याज्यया गमयति वषट्कारेणै वैनम्पुरोऽनुवाक्यया दत्ते प्र यच्छति याज्यया प्रति वषट्कारेण स्थापयति त्रिपदा पुरोऽनुवाक्या भवति त्रय इमे लोका एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्द्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात्प्रति तिष्ठति गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्यैषा वै सप्तपदा शक्वरी यद्वा एतया देवा अशिक्षन्तदशक्नुवन्य एवं वेद शक्नोत्येव यच्छिक्षति ॥२॥

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोत्रास्त्विति सोऽब्रवीद्यजान्व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यभि घारयन्ति ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयामान्यन्यानि हवीꣳष्ययातयाममाज्यमिति प्राजापत्यमिति ब्रूयादयातयामा हि

देवानाम्प्रजापतिरिति च्छन्दाँसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन्पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तं जुहोति च्छन्दाँस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्त्यङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन्तदृषयो यज्ञवास्त्वभ्यवायन्तेऽपश्यन्पुरोडाशं कूर्मम्भूतँ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति सुवर्गस्य लोकस्याभिजित्यै तमब्रुवन्कथाहास्था इत्यनुपाक्तोऽभूवमित्यब्रवीद्यथाक्षोऽनुपाक्तोऽवार्च्छत्येवमवारमित्युपरिष्टादभ्यज्याधस्तादुपानक्ति सुवर्गस्य लोकस्य समष्ट्यै सर्वाणि कपालान्यभि प्रथयति तावतः पुरोडाशानमुष्मिँल्लोकेऽभि जयति यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतंकृत्यः सदेवत्वाय भस्मनाभि वासयति तस्मान्माँसेनास्थि च्छन्नं वेदेनाभि वासयति तस्मात्केशैः शिरश्छन्नं प्रच्युतं वा एतदस्माँल्लोकादगतं देवलोकं यच्छृतँ हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्र मीयेत यद्द्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यजमानः प्र मीयेत संख्यायोद्वासयति यजमानस्य गोपीथाय यदि नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपालमश्विनौ वै देवानाम्भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्नश्यति यन्नश्यत्यनयोरेवैनद्विन्दति प्रतिष्ठित्यै ॥३॥

देवस्यं त्वा सवितुः प्रंसुव इति स्फ्यमा दंत्ते प्रसूत्या अश्विनौर्बाहुभ्यामित्याहाश्विनौ हि देवानांमध्वर्यू आस्तां पूष्णो हस्तांभ्यामित्यांहु यत्यै शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्यांहु वज्रमेव तत्सँ श्यंति भ्रातृव्याय प्रहरिष्य न्त्स्तंम्बयजुर्हरत्येतावंती वै पृंथिवी यावंती वेदिस्तस्यां एतावंत एव भ्रातृव्यं निर्भजति तस्मान्नाभागं निर्भजन्ति त्रिर्हरति त्रयं इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति तूष्णीं चंतुर्थँ हंरत्यपंरिमितादेवैनं निर्भजत्यु द्धन्ति यदेवास्यां अमेध्यं तदपं हन्त्यु द्धन्ति तस्मादोषंधयः परां भवन्ति मूलं छिनत्ति भ्रातृंब्यस्यैव मूलं छिनत्ति पितृदेवत्यातिंखातेयंतीं खनति प्रजापंतिना यज्ञमुखेन सम्मिंता मा प्रंतिष्ठायै खनति यजंमानमेव प्रंतिष्ठां गंमयति दक्षिणतो वर्षीयसीं करोति देवयजंनस्यैव रूपमंकः पुरींषवतीं करोति प्रजा वै पशवः पुरींषम्प्रजयैवैनंम्पशुभिः पुरींषवन्तं करोत्यु त्तंरम्परिग्राहम्परिं गृह्णात्येतावंती वै पृंथिवी यावंती वेदिस्तस्यां एतावंत एव भ्रातृव्यं निर्भज्यात्मन उत्तंरम्परिग्राहम्परिं गृह्णाति क्रूरमिंव वा एतत्कंरोति यद्वेदिं करोति धा अंसि स्वधा असीतिं योयुप्यते शान्त्यै प्रोक्षंणीरा सांदयत्यापो वै रंक्षोघ्नी रक्षंसामपंहत्यै स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य संतंत्यै यं द्विष्यात्तं ध्यांयेच्छुचैवैनंमर्पयति ॥४॥

ब्रह्मवादिनौ वदन्त्यद्भिर्हवीँषि प्रौक्षीः केनाप इति ब्रह्मणेतिं ब्रूयादद्भिर्ह्येव हवीँषिं प्रोक्षति ब्रह्मंणा इध्माबर्हिः प्रोक्षंति मेध्यंमेवैनंत्करोति वेदिम्प्रोक्षंत्यृक्षा वा एषालोमकांमेध्या यद्वेदिर्मेध्यांमेवैनां करोति दिवे त्वान्तरिंक्षाय त्वा पृथिव्यै त्वेतिं बर्हिरासाद्य प्रोक्षंत्येभ्य एवैनंल्लोकेभ्यः प्रोक्षंति क्रूरमिंव वा एतत्कंरोति

यत्खनन्त्यपो नि नयति शान्त्यै पुरस्तात्प्रस्तरं गृह्णाति मुख्यमेवैनं करोती यन्तं गृह्णाति प्रजापतिना यज्ञमुखेन सम्मितं बर्हिः स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्याम्प्रति ष्ठापयत्य नतिदृश्नँ स्तृणाति प्रजयैवैनम्पशुभिरनतिदृश्नं करोत्युत्तरम्बर्हिषः प्रस्तरँ सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरोऽन्तर्दधाति व्यावृत्या अनक्ति हविष्कृतमेवैनँ सुवर्गं लोकं गमयति त्रेधानक्ति त्रय इमे लोका एभ्य एवैनं लोकेभ्योऽनक्ति न प्रति शृणाति यत्प्रतिशृणीयादनूर्ध्वम्भावुकं यजमानस्य स्यादुपरीव प्र हरत्युतिपरीव हि सुवर्गो लोको नि यच्छति वृष्टिमेवास्मै नि यच्छति नात्यग्रम्प्र हरेद्यदत्यग्रम्प्रहरेदत्यासारिण्यध्वर्योर्नाशुका स्या न्न पुरस्तात्प्रत्यस्येद्यत्पुरस्तात्प्रत्यस्यैत्सुवर्गाल्लोकाद्यजमानम्प्रति नुदेत्प्राञ्चम्प्र हरति यजमानमेव सुवर्गं लोकं गमयति न विष्वञ्चं वि युयाद्यद्विष्वञ्चं वियुयात्स्त्र्यस्य जायेतो ध्वमुद्यौत्यूर्ध्वमिव हि पुँसः पुमानेवास्य जायते यत्स्फ्येन वोपवेषेण वा योयुप्येत स्तृतिरिवास्य सा हस्तेन योयुप्यते यजमानस्य गोपीथाय ब्रह्मवादिनो वदन्ति किं यज्ञस्य यजमान इति प्रस्तर इति तस्य क्व सुवर्गो लोक इत्याहवनीय इति ब्रूयाद्यत्प्रस्तरमाहवनीये प्रहरति यजमानमेव सुवर्गं लोकं गमयति वि वा एतद्यजमानो लिशते यत्प्रस्तरं योयुप्यन्ते बर्हिरनु प्र हरति शान्त्या अनारम्भण इव वा एतर्ह्यध्वर्युः स ईश्वरो वेपनो भवितोर्ध्रुवासीतीमामभि मृशतीयं वै ध्रुवास्यामेव प्रति तिष्ठति न वेपनो भवत्य गा३नग्नीदित्याह यद्ब्रूयादगन्नग्निरित्यग्नावग्निं गमयेन्निर्यजमानँ सुवर्गाल्लोकाद्बजेदगन्नित्येव ब्रूयाद्यजमानमेव सुवर्गं लोकं गमयति ॥५॥

अग्नेस्त्रयो ज्यायाँसो भ्रातर आसन्ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमारिष्यतीति स निलायत सोऽपः प्राविशत्तं देवताः प्रैषमैच्छन्तम्मत्स्यः प्राब्रवीत्तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तो हि तमन्वविन्दन्तमब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात्तन्मे भ्रातृणाम्भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति परिधीन्परि दधाति रक्षसामपहत्यै सँ स्पर्शयति रक्षसामनन्ववचाराय न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाँस्यपहन्त्यूर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाँस्यप हन्ति यजुषान्यां तूष्णीमन्याम्मिथुनत्वाय द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्यार्त्या वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान्भवति भूयसीर्हि देवताः प्रीणाति जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाँशुयाजमन्तरा यजत्यजामित्वायाथो मिथुनत्वायाग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन्ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्निमुपामन्त्रयन्त राज्येन पितरो यमं तस्मादग्निर्देवानामन्नादो यमः पितृणाँ राजा य एवं वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयम्प्रायच्छन्यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रँ समर्धयति सकृत्सकृदव द्यति सकृदिव हि रुद्र उत्तरार्धादव द्यत्येषा वै रुद्रस्य दिक्स्वायामेव दिशि रुद्रं निरवदयते द्विरभि घारयति

चतुरवत्तस्याप्त्यै पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत्पूर्वा आहुतीरभि जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय ॥६॥

मनुः पृथिव्या यज्ञियमैच्छत्स घृतं निषिक्तमविन्दत्सोऽब्रवीत्कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूताम्मित्रावरुणौ गोरेवावमीश्वरौ कर्तोः स्व इति तौ ततो गाँ समैरयताँ सा यत्रयत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्धृतपद्युच्यते तदस्यै जन्मो पहूतँ रथंतरँ सह पृथिव्येत्याहेयं वै रथंतरमिमामेव सहान्नाद्येनोप ह्वयत उपहूतं वामदेव्यँ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोप ह्वयत उपहूतम्बृहत्सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोप ह्वयत उपहूताः सप्त होत्रा इत्याह होत्रा एवोप ह्वयत उपहूता धेनुः सहर्षभेत्याह मिथुनमेवोप ह्वयत उपहूतो भक्षः सखेत्याह सोमपीथमेवोप ह्वयत उपहूतां३ हो इत्याहात्मानमेवोप ह्वयत आत्मा ह्युपहूतानां वसिष्ठ इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवो मानवीत्याह मनुर्ह्येतामग्रेऽपश्यद्घृतपदीत्याह यदेवास्यै पदाद्धृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाँ समैरयतां ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोप ह्वयते दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इत्याह देवमनुष्यानेवोप ह्वयते य इमं यज्ञमवान्ये यज्ञपतिं वर्धानित्याह यज्ञाय चैव यजमानाय चाशिषमा शास्त उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोप ह्वयते पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे उपहूतोऽयं यजमान इत्याह यजमानमेवोप ह्वयत उत्तरस्यां

देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्नुपहूत इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धामे दमसीदमसीत्येव यज्ञस्य प्रियं धामोप ह्वयते विश्वमस्य प्रियमुपहूतमित्याहाच्छम्बट्कारमेवोप ह्वयते ॥७॥

पशवो वा इडा स्वयमा दत्ते काममेवात्मना पशूनामा दत्ते न ह्यन्यः कामम्पशूनाम्प्रयच्छति वाचस्पतये त्वा हुतम्प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतम्प्राश्नामीत्याह स्वगाकृत्यै चतुरवत्तम्भवति हविर्वै चतुरवत्तम्पशवश्चतुरवत्तं यद्धोता प्राश्नीयाद्धोतार्तिमार्च्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्याद्वाचस्पतये त्वा हुतम्प्राश्नामीत्याह परोऽक्षमेवैनञ्जुहोति सदसस्पतये त्वा हुतम्प्राश्नामीत्याह स्वगाकृत्यै प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणां ददाति तीर्थ एव दक्षिणां ददाति वि वा एतद्यज्ञं छिन्दन्ति यन्मध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ सं तन्वन्ति देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत्तं देवा अभि समगच्छन्त कल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै न इदम्भविष्यति यदिमꣳ राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वं तस्याविद्धं निरकृन्तन्यवेन सम्मितं तस्माद्यवमात्रमव द्ये द्यज्ज्यायोऽवद्येद्रोपयेत्तद्यज्ञस्य यदुप च स्तृणीयादभि च घारयेदुभयतःसꣳश्वायि कुर्यादवदायाभि घारयति द्विः सम्पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै यत्तिरश्चीनमतिहरेदनभिविद्धं यज्ञस्याभि विध्येदग्रेण परि हरति तीर्थेनैव परि हरति तत्पूष्णे पर्यहरन्तत्पूषा प्राश्य दतोऽरुणत्तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन्वि वा

अयमाध्यर्प्राशित्रियो वा अयमभूदिति तद्बृहस्पतये
पर्यहरन्त्सोऽबिभेद्बृहस्पतिरित्थं वाव स्य आर्तिमारिष्यतीति स
एतम्मन्त्रमपश्यत्सूर्यस्य त्वा चक्षुषा प्रति पश्यामीत्यब्रवीन्न हि सूर्यस्य
चक्षुः किं चन हिनस्ति सोऽबिभेत्प्रतिगृह्णन्तम्मा हिँसिष्यतीति देवस्य
त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्प्रति
गृह्णामीत्यब्रवीत्सवितृप्रसूत एवैनद्ब्रह्मणा देवताभिः
प्रत्यगृह्णात्सोऽबिभेत्प्राश्नन्तम्मा हिँसिष्यतीत्यग्नेस्त्वास्यैन
प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति सोऽबिभेत्प्राशितम्मा
हिँसि ष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरं किं चन
हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठोऽप वा एतस्मात्प्राणाः क्रामन्ति
यः प्राशित्रम्प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्सम्मृशतेऽमृतं वै प्राणा
अमृतमापः प्राणानेव यथास्थानमुप ह्वयते ॥८॥

अग्नीध आ दधात्यग्निमुखानेवर्तून्प्रीणाति समिधमा
दधात्युत्तरासामाहुतीनाम्प्रतिष्ठित्या अथो समिद्वत्येव जुहोति
परिधीन्त्सम्मार्ष्टि पुनात्येवैना न्त्सकृत्सकृत्सम्मार्ष्टि पराङिव ह्येतर्हि
यज्ञ श्चतुः सम्पद्यते चतुष्पादः पशवः पशूनेवाव रुन्द्धे ब्रह्मन्प्र स्थास्याम
इत्याहात्र वा एतर्हि यज्ञः श्रितो यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्तत एवैनमा
रभते यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा
शीर्षक्तिमान्त्स्याद्यत्तूष्णीमासीतासम्प्रत्तो यज्ञः स्यात्प्र तिष्ठेत्येव ब्रूयाद्वाचि
वै यज्ञः श्रितो यत्रैव यज्ञः श्रितस्तत एवैनँ सम्प्र यच्छति देव
सवितरेतत्ते प्राहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि ब्रह्मिष्ठः स
यज्ञम्पाहि स यज्ञपतिम्पाहि स माम्पाहीत्याह यज्ञाय यजमानायात्मने

तेभ्य॑ ए॒वाशिष॒मा शा॒स्तेऽना॑र्त्या आ॒श्राव्या॑ह दे॒वान्य॒जेति॑ ब्रह्मवा॒दिनो॑
वदन्ती॒ष्टा दे॒वता॒ अथ॑ कत॒म ए॒ते दे॒वा इ॒ति च्छन्दा॒ꣳसीति॑ ब्रूयाद्गाय॒त्रीं
त्रि॒ष्टुभ॒ं जग॑ती॒मित्यथो॒ खल्वा॑हुर्ब्राह्म॒णा वै च्छन्दा॒ꣳसीति॒ ताने॒व तद्य॑जति
दे॒वाना॒ं वा इ॒ष्टा दे॒वता॒ आस॒न्नथा॒ग्निर्नोद॑ज्वल॒त्तं दे॒वा
आहु॑तीभिरनूया॒जेष्वन्व॑विन्द॒न्यद॑नूया॒जान्यज॑त्य॒ग्निमे॒व तत्समि॑न्द्ध ए॒तदु॒र्वै
नामा॑सु॒र आ॑सी॒त्स ए॒तर्हि॑ य॒ज्ञस्या॒शिष॑मवृ॒ङ्क्त यद्ब्रू॒यादे॒तदु॒ द्यावापृथिवी
भ॒द्रम॑भू॒दित्ये॒तदु॑मे॒वासु॒रं य॒ज्ञस्या॒शिषं॑ गमयेदि॒दं द्या॑वापृथिवी
भ॒द्रम॑भू॒दित्ये॒व ब्रू॑या॒द्यज॑मानमे॒व य॒ज्ञस्या॒शिषं॑ गमय॒त्या¯र्ध्म॑ सू॒क्तवा॒कमु॒त
न॑मोवा॒कमित्या॑हे॒दम॑रा॒त्स्मेति॒ वावैतदा॒हो¯प॑श्रितो दि॒वः पृ॒थि॒व्योरित्या॑ह॒
द्यावा॑पृथि॒व्योर्हि य॒ज्ञ उप॑श्रित॒ ओम॑न्वती ते॒ऽस्मिन्य॒ज्ञे य॑जमान॒
द्यावा॑पृथि॒वी स्ता॒मित्या॑हा॒शिष॑मे॒वैतामा शा॑स्ते॒ यद्ब्रू॒यात्सू॑पावसा॒ना च॑
स्वध्यवसा॒ना चेति॑ प्र॒मायु॑को॒ यज॑मानः स्याद्य॒दा हि
प्र॒मीय॒तेऽथे॒मामु॑पाव॒स्यति॑ सूपचर॒णा च॑ स्वधिचर॒णा चेत्ये॒व
ब्रू॑या॒द्वरी॑यसीमे॒वास्मै॒ गव्यू॑ति॒मा शा॑स्ते॒ न प्र॒मायु॑को भवति॒
तयो॑रा॒विद्य॒ग्निरि॒दꣳ ह॒विर॑जुष॒तेत्या॑ह॒ या अया॑क्ष्म दे॒वता॒स्ता अ॑रीरधा॒मेति॒
वावैतदा॑ह॒ यन्न नि॑र्दि॒शेत्प्रति॑वेशं य॒ज्ञस्या॒शीर्ग॑च्छे॒दा शा॑स्ते॒ऽयं
यज॑मानो॒ऽसावित्या॑ह नि॒र्दिश्यै॒वैनꣳ सु॒व॒र्गं लो॒कं ग॑मय॒त्या¯यु॒रा शा॑स्ते
सु॒प्रजा॒स्त्वमा शा॑स्त॒ इत्या॑हा॒शिष॑मे॒वैतामा शा॑स्ते सजातवन॒स्यामा शा॑स्त॒
इत्या॑ह प्रा॒णा वै स॑जा॒ताः प्रा॒णाने॒व नान्तरे॑ति॒ तद॒ग्निर्दे॒वो दे॒वेभ्यो॒ वन॑ते
व॒यम॒ग्नेर्मानु॑षा॒ इत्या॑हा॒ग्निर्दे॒वेभ्यो॑ वनु॒ते व॒यम्म॑नु॒ष्ये॑भ्य॒ इ॒ति वावैतदा॑हे॒¯ह
गति॑र्वा॒मस्ये॒दं च॒ नमो॑ दे॒वेभ्य॒ इत्या॑ह॒ याश्चै॒व दे॒वता॒ यज॑ति॒ याश्च॒ न ताभ्य॑
ए॒वोभ्यये॑भ्यो॒ नम॑स्करोत्या॒त्मनोऽना॑र्त्यै ॥६॥

देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन्ते शम्युम्बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति सोऽब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै सा मे यज्ञस्याशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्दधानो यजते शम्युमेव तस्य बार्हस्पत्यं यज्ञस्याशीर्गच्छत्येतन्ममेत्यब्रवीत्किम्मे प्रजाया इति योऽपगुरातै शतेन यातयाद्यो निहनत्सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पाꣳसून्त्संगृह्णात्तावतः संवत्सरान्पितृलोकं न प्र जानादिति तस्माद्ब्राह्मणाय नापगुरेत न नि हन्यान्न लोहितं कुर्यादेतावता हैनसा भवति तच्छम्योरा वृणीमह इत्याह यज्ञमेव तत्स्वगा करोति तच्छम्योरा वृणीमह इत्याह शम्युमेव बार्हस्पत्यम्भागधेयेन समर्धयति गातुं यज्ञाय गातुं यज्ञपतय इत्याहाशिषमेवैतामा शास्ते सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि करोति देवानाम्पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै जामि वा एतद्यज्ञस्य क्रियते  यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्टयजुः पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्यन्ति ॥१०॥

युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥
उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ॥
त्वꣳ ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः ॥
अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ॥
तं नेमिमृभवो यथानमस्व सहूतिभिः । नेदीयो यज्ञमङ्गिरः ॥

तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ॥
कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे ॥
मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्नियाः ॥
मा नः समस्य दूढ्यः परिद्वेषसो अꣳहुतिः ऊर्मिर्न नावमा वधीत् ॥
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः अमैरमित्रमर्दय ॥
कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि ॥
मा नो अस्मिन्महाधने परा वर्ग्भारभृद्यथा । संवर्गꣳ सꣳ रयिं जय ॥
अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना । वर्धा नो अमवच्छवः ॥
यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा । तं घेदग्निर्वृधावति ॥
परस्या अधि संवतोऽवराꣳ अभ्या तर । यत्राहमस्मि ताꣳ अव ॥
विद्मा हि ते पुरा वयमग्ने पितुर्यथावसः । अधा ते सुम्नमीमहे ।
य उग्र इव शर्यहा तिग्मशृङ्गो न वꣳसगः । अग्ने पुरो रुरोजिथ ॥
सखायः सं वः सम्यञ्चमिषꣳ स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥
सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्या भर ॥
प्रजापते स वेद सोमापूषणेमौ देवौ ॥११॥

उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आ वह पितृन्हविषे अत्तवे ॥
त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् । तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥
त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।

वन्वन्नवातः परिधीँरपोर्णु वीरेभिरश्वैर्मघवा भव नः ॥
त्वँ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ । तस्मै त
इन्दो हविषा विधेम वयँ स्याम पतयो रयीणाम् ॥
अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः । अत्ता
हवीँषि प्रयतानि बर्हिष्यथा रयिँ सर्ववीरं दधातन ॥
बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् । त आ
गतावसा शंतमेनाथास्मभ्यँ शं योररपो दधात ॥
आहम्पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥
उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आ गमन्तु त इह
श्रुवन्त्वधि ब्रुवन्तु ते अवन्त्वस्मान् ॥
उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका
ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥
इदम्पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः । ये पार्थिवे
रजस्या निषत्ता ये वा नूनँ सुवृजनासु विक्षु ॥
अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥
यदग्ने कव्यवाहन पितॄन्यक्षयृतावृधः । प्र च हव्यानि वक्ष्यसि देवेभ्यश्च
पितृभ्य आ ॥
त्वमग्न ईडितो जातवेदो ऽवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः
स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवीँषि ॥
मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः । याँश्च देवा
वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति इमं यम प्रस्तरमा हि

सीदाङ्गिरोभिः पितृभिः संविदानः । आ त्वा मन्त्राः कविशस्ता
वहन्त्वेना राजन्हविषा मादयस्व ॥
अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व । विवस्वन्तꣳ हुवे
यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य ॥
अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयꣳ
सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥१२॥

इति द्वितीयकाण्डे षष्ठः प्रपाठकः ६

इति द्वितीयं काण्डं सम्पूर्णम्

## अथ तृतीयं काण्डम्

### अथ तृतीयकाण्डे प्रथमः प्रपाठकः १

प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्पानसृजत
सोऽकामयत प्रजाः सृजेयेति स द्वितीयमतप्यत स वयाꣳस्यसृजत
सोऽकामयत प्रजाः सृजेयेति स तृतीयमतप्यत स एतं
दीक्षितवादमपश्यत्तमवदत्ततो वै स प्रजा असृजत यत्तपस्तप्त्वा
दीक्षितवादं वदति प्रजा एव तद्यजमानः सृजते यद्वै दीक्षितोऽमेध्यं
पश्यत्यपास्माद्दीक्षा क्रामति नीलमस्य हरो व्यैत्यबद्धं मनो दरिद्रं चक्षुः
सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीरित्याह नास्माद्दीक्षाऽप
क्रामति नास्य नीलं न हरो व्यैति यद्वै दीक्षितमभिवर्षति दिव्या
आपोऽशान्ता ओजो बलं दीक्षां तपोऽस्य निर्घ्नन्त्युन्दतीर्बलं धत्तौजो धत्त
बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्याहैतदेव सर्वमात्मन्धत्ते
नास्यौजो बलं न दीक्षां न तपो निर्घ्नन्त्यग्निर्वै दीक्षितस्य देवता
सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तोर्भद्रादभि

श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते स एनं सं पारयत्येदमगन्म देवयजनं पृथिव्या इत्याह देवयजनं ह्येष पृथिव्या आगच्छति यो यजते विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा ऋक्सामाभ्यां यजुषा सन्तरन्त इत्याहक्सामाभ्यां ह्येष यजुषा सन्तरति यो यजते रायस्पोषेण समिषा मदेमेत्याहाशिषमेवैतामा शास्ते ॥१॥

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानां साम्राज्यं गच्छेति मे सोमाय ब्रूताद्यो वै सोमं राजानं साम्राज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानां साम्राज्यं छन्दांसि खलु वै सोमस्य राज्ञः साम्राज्यो लोकः पुरस्तात्सोमस्य क्रयादेवमभि मन्त्रयेत साम्राज्यमेवैनं लोकं गमयित्वा क्रीणाति गच्छति स्वानां साम्राज्यं यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रति तिष्ठतीति प्रजापतौ मनसीति ब्रूयात्त्रिरव जिघ्रेत्प्रजापतौ त्वा मनसि जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यो वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्ना श्रावयेदेषा वा अध्वर्योः प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यदभिक्रम्य जुहुयात्प्रतिष्ठाया इयात्तस्मात्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै यो वा अध्वर्योः स्वं वेद स्ववानेव भवति स्रुग्वा अस्य स्वं वायव्यमस्य स्वं चमसोऽस्य स्वं यद्वायव्यं वा चमसं वानन्वारभ्याश्रावयेत्स्वादियात्तस्मादन्वारभ्याश्राव्यं स्वादेव नैति यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः

स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमः स्तोमस्य स्तोम उक्थानां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्प्रत्येव सोमँ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रति यजमानस्तिष्ठति प्रत्यध्वर्युः ॥२॥

यज्ञं वा एतत्सं भरन्ति यत्सोमक्रयण्यै पदं यज्ञमुखँ हविर्धाने यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्याद्यज्ञमुख एव यज्ञमनु सं तनोति प्राञ्चमग्निं प्र हरन्त्युत्पत्नीमा नयन्त्यन्वनाँसि प्र वर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोऽनु ध्यायति स ईश्वरो रुद्रो भूत्वा प्रजां पशून्यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणँ हरेत्तेनैवैनं भागिनं करोति यजमानो वा आहवनीयो यजमानं वा एतद्वि कर्षन्ते यदाहवनीयात्पशुश्रपणँहरन्ति स वैव स्यान्निर्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्वाय यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमव द्येत्सैव ततः प्रायश्चित्ति र्ये पशुं विमथ्नीरन्यस्तान्कामयेता र्तिमार्च्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाग्नीध्रे जुहुयान्नमोवृक्तिमेवैषां वृङ्क्ते ताजगार्तिमार्च्छन्ति ॥३॥

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः ।
तस्मै प्रति प्र वेदय चिकित्वाँ अनु मन्यताम् ॥
इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये ।
अनु मन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् ॥
प्रजानन्तः प्रति गृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् ।

सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रति तिष्ठा शरीरैः ॥
येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् ।
निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु ॥
ये बध्यमानमनु बध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च ।
अग्निस्ताँ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥
य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।
वायुस्ताँ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥
प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।
उपाकृतँ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः ॥
नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः ।
जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः ॥
यत्पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो
विश्वान्मुञ्चत्वँहसः ॥
शमितार उपेतन यज्ञं देवेभिरिन्वितम् । पाशात्पशुं प्र मुञ्चत
बन्धाद्यज्ञपतिं परि ॥
अदितिः पाशं प्र मुमोक्त्वेतं नमः पशुभ्यः पशुपतये करोमि ।
अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रति मुञ्चामि पाशम् ॥
त्वामु ते दधिरे हव्यवाहँ शृतंकर्तारमुत यज्ञियं च ।
अग्ने सदक्षः सतनुर्हि भूत्वाथ हव्या जातवेदो जुषस्व ॥
जातवेदो वपया गच्छ देवान्त्वँ हि होता प्रथमो बभूथ ।
घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतँ हविरदन्तु देवाः ॥
स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥४॥

प्राजापत्या वै पशवस्तेषाꣳ रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रतिप्रोच्या लभत आत्मनोऽनाव्रस्काय द्वाभ्यामुपाकरोति द्विपाद्यजमानः प्रतिष्ठित्या उपाकृत्य पञ्च जुहोति पाङ्क्ताः पशवः पशूनेवाव रुन्धे मृत्यवे वा एष नीयते यत्पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यान्नाना प्राणो यजमानस्य पशुनेत्याह व्यावृत्त्यै यत्पशुर्मायुमकृतेति जुहोति शान्त्यै शमितार उपेतनेत्याह यथायजुरेवैत द्वपायां वा आह्रियमाणायामग्नेर्मेधोऽप क्रामति त्वामु ते दधिरे हव्यवाहमिति वपामभि जुहोत्यग्नेरेव मेधमव रुन्धेऽथो शृतत्वाय पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति तानेवोभयान्प्रीणाति ॥५॥

यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्चयते पापीयान्भवति यो यथादेवतं न देवताभ्य आ वृश्चयते वसीयान्भवत्याग्नेय्यर्चाग्नीध्रमभि मृशेद्वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदो यथादेवतमेव यज्ञमुप चरति न देवताभ्य आ वृश्चयते वसीयान्भवति युनज्मि ते पृथिवीं ज्योतिषा सह युनज्मि वायुमन्तरिक्षेण ते सह युनज्मि वाचꣳ सह सूर्येण ते युनज्मि तिस्रो विपृचः सूर्यस्य ते अग्निर्देवता गायत्री च्छन्द उपाꣳशोः पात्रमसि सोमो देवता त्रिष्टुप्छन्दोऽन्तर्यामस्य पात्रमसी न्द्रो देवता जगती च्छन्द इन्द्रवायुवोः पात्रमसि बृहस्पतिर्देवतानुष्टुप्छन्दो मित्रावरुणयोः पात्रमस्यश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि सूर्यो देवता बृहती च्छन्दः शुक्रस्य पात्रमसि चन्द्रमा देवता सतोबृहती च्छन्दो मन्थिनः पात्रमसि विश्वे देवा देवतोष्णिहा च्छन्द आग्रयणस्य पात्रमसी न्द्रो देवता ककुच्छन्द

उक्थानाम्पात्रमसि पृथिवी देवता विराट्छन्दो ध्रुवस्य पात्रमसि ॥६॥

इष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयत आसन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाकाज्जुहुयादात्मन एव तदध्वर्युः पुरस्ताच्छर्म नह्यतेऽनार्त्यै संवेशाय त्वोपवेशाय त्वा गायत्रियास्त्रिष्टुभो जगत्या अभिभूत्यै स्वाहा प्राणापानौ मृत्योर्मा पातम्प्राणापानौ मा मा हासिष्टं देवतासु वा एते प्राणापानयोर्व्यायच्छन्ते येषाँ सोमः समृच्छते संवेशाय त्वोपवेशाय त्वेत्याह च्छन्दाँसि वै संवेश उपवेशश्छन्दोभिरेवास्य च्छन्दाँसि वृङ्क्ते प्रेतिवन्त्याज्यानि भवन्त्यभिजित्यै मरुत्वतीः प्रतिपदो विजित्या उभे बृहद्रथन्तरे भवत इयं वाव रथंतरमसौ बृहदाभ्यामेवैनमन्तरैत्यद्य वाव रथंतरँ श्वो बृहदद्याश्वादेवैनमन्तरैति भूतं वाव रथंतरम्भविष्यद्बृहद्भूताच्चैवैनम्भविष्यतश्चान्तरैति परिमितं वाव रथंतरमपरिमितम्बृहत्परिमिताच्चैवैनमपरिमिताच्चान्तरैति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताँ स एतज्जमदग्निर्विहव्यमपश्यत्तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्यँ शस्यत इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते यस्य भूयाँसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति यद्यग्निष्टोमः सोमः पुरस्तात्स्यादुक्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीत यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान्भवति ॥७॥

निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणम्मे तर्पयतापानम्मे तर्पयत व्यानम्मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रम्मे तर्पयत मनो मे तर्पयत वाचम्मे तर्पयतात्मानम्मे तर्पयताङ्गानि मे तर्पयत प्रजाम्मे तर्पयत पशून्मे तर्पयत

गृहान्मे तर्पयत गणान्मे तर्पयत सर्वगणम्मा तर्पयत तर्पयत मा गणा मे मा वि तृष न्नोषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोमोऽवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ताꣳ सवनाय सोम मित्याहौषधीभ्य एवैनꣳ स्वायै विशः स्वायै देवतायै निर्याच्याभि षुणोति यो वै सोमस्याभिषूयमाणस्य प्रथमोꣳशुः स्कन्दति स ईश्वर इन्द्रियं वीर्यम्प्रजाम्पशून्यजमानस्य निर्हन्तोस्तमभि मन्त्रयेता मास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियम्मे वीर्यम्मा निर्वधीरित्याशिषमेवैतामा शास्त इन्द्रियस्य वीर्यस्य प्रजायै पशूनामनिर्घाताय द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥८॥

यो वै देवान्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपाꣳशु गृह्णीयाद्यानूर्ध्वाꣳस्तानुपब्दिमतो देवानेव तद्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येष्व ग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महिना विश्वशम्भूः । स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम ॥ विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्याम ॥
इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त । ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु ॥

आयतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्याः सौम्यास्ता अनायतना
ऐन्द्रवायवमादायाघारमाघारयेदध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोमेति सौम्या एव तदाहुतीरायतनवतीः करोत्यायतनवान्भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनत्ति ते व्युत्ते उपजीवनीये भवत उपजीवनीयो भवति य एवं वेदै ष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेगौपत्यँ रायस्पोषँसुवीर्यँ संवत्सरीणाँ स्वस्तिम्
॥
मनुः पुत्रेभ्यो दायं व्यभजत्स नाभानेदिष्ठम्ब्रह्मचर्यं वसन्तं निरभजत्स आगच्छत्सोऽब्रवीत्कथा मा निरभागिति न त्वा निरभाक्षमित्यब्रवी दङ्गिरस इमे सत्त्रमासते ते सुवर्गं लोकं न प्र जानन्ति तेभ्य इदम्ब्राह्मणम्ब्रूहि ते सुवर्गं लोकम्यन्तो य एषाम्पशवस्ताँस्ते दास्यन्तीति तदेभ्योऽब्रवीत्ते सुवर्गं लोकं यन्तो य एषाम्पशव आसन्तानस्मा अददु स्तम्पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै मह्यमिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम वै तदिति तस्माद्यज्ञवास्तु नाभ्यवेत्यँ सोऽब्रवीद्यज्ञे मा भजाथ ते पशून्नाभि मँस्य इति तस्मा एतम्मन्थिनः सँस्रावमजुहोत्ततो वै तस्य रुद्रः पशून्नाभ्यमन्यत यत्रैतमेवं विद्वान्मन्थिनः सँस्रावं जुहोति न तत्र रुद्रः पशूनभि मन्यते ॥९॥

जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् । यद्वाचो मधुमत्तस्मिन्मा धाः स्वाहा सरस्वत्यै ॥

ऋचा स्तोम॒ꣳ सम॑र्धय गाय॒त्रेण॑ रथंत॒रम् । बृ॒हद्गा॑य॒त्रव॑र्तनि ॥
यस्ते॑ द्र॒प्स स्कन्द॑ति॒ यस्ते॑ अ॒ꣳशुर्बा॒हुच्यु॑तो धि॒षण॑योरु॒पस्था॑त् ।
अ॒ध्व॒र्योर्वा॒ परि॒ यस्ते॑ प॒वित्रा॒त्स्वाहा॑कृत॒मिन्द्रा॑य॒ तं जु॑होमि ॥
यो द्र॒प्सो अ॒ꣳशुः प॑ति॒तः पृ॑थि॒व्याम्परिवा॒पात्पु॑रो॒डाशा॑त्कर॒म्भात् ।
धा॒ना॒सो॒मान्म॒न्थिन॑ इन्द्र शु॒क्रात्स्वाहा॑कृत॒मिन्द्रा॑य तं जु॑होमि ॥
यस्ते॑ द्र॒प्सो मधु॑मा॒ꣳ इन्द्रि॒यावा॒न्त्स्वाहा॑कृत॒ः पुन॑र॒प्येति॑ दे॒वान् । दि॒वः
पृ॑थि॒व्याः पर्य॒न्तरि॑क्षा॒त्स्वाहा॑कृत॒मिन्द्रा॑य॒ तं जु॑होमि ॥
अ॒ध्व॒र्युर्वा ऋ॒त्विजा॑म्प्रथ॒मो यु॑ज्यते॒ तेन॒ स्तोमो॑ योक्त॒व्य॑ इत्या॑हु॒र्वाग॑ग्रे॒गा
अग्र॑ एत्वृजु॒गा दे॒वेभ्यो॒ यश॒ो मयि॒ दध॑ती प्रा॒णान्प॒शुषु॑ प्र॒जाम्मयि॑ च॒
यज॑माने॒ चेत्या॑ह॒ वाच॑मे॒व तद्य॑ज्ञमु॒खे यु॑नक्ति॒ वास्तु॒ वा ए॒तद्य॒ज्ञस्य॑ क्रियते॒
यद्ग्रहा॑न्गृही॒त्वा ब॑हिष्पवमा॒नꣳ सर्प॑न्ति॒ परा॑ञ्चो॒ हि यन्ति॒ परा॑चीभिः
स्तु॒वते॑ वैष्ण॒व्यर्चा पु॒नरेत्योप॑ तिष्ठते य॒ज्ञो वै विष्णु॑र्य॒ज्ञमे॒वाक॒र्विष्णो॒ त्वं
नो॒ अन्त॑म॒ः शर्म॑ यच्छ सहन्त्य । प्र ते॒ धारा॑ मधु॒श्चुत॒ उत्सं॑ दुह्रते॒
अक्षि॑त॒मित्या॑ह॒ यदे॒वास्य॒ शया॑नस्योप॒शुष्य॑ति॒ तदे॒वास्यै॒तेनाप्या॑ययति
॥१०॥

अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे । य॒शसं॑ वी॒रव॑त्तमम् ॥
गोमा॑ꣳ अ॒ग्नेऽवि॑मा॒ꣳ अ॒श्वी य॒ज्ञो नृ॒वत्स॑खा॒ सद॒मिद॑प्रमृ॒ष्यः । इडा॑वा॒ꣳ
ए॒षो अ॑सुर प्र॒जावा॑न्दी॒र्घो र॒यिः पृ॑थुबु॒ध्नः स॒भावा॑न् ॥
आ प्या॑यस्व॒ सं ते॑ ॥
इ॒ह त्वष्टा॑रमग्रि॒यं वि॒श्वरू॑प॒मुप॑ ह्वये । अ॒स्माक॑मस्तु॒ केव॑लः ॥
तन्न॑स्तु॒रीप॒मध॑ पोषयि॒त्नु देव॑ त्वष्ट॒र्वि र॑रा॒णः स्य॑स्व । यतो॑ वी॒रः

कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥
शिवस्त्वष्टरिहा गहि विभुः पोष उत त्मना । यज्ञेयज्ञे न उदव ॥
पिशंगरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः । प्रजां त्वष्टा
वि ष्यतु नाभिमस्मे अथा देवानामप्यैतु पाथः ॥
प्र णो दे व्या नो दिवः ॥
पीपिवाँसँ सरस्वतः स्तनं यो विश्वदर्शतः । धुक्षीमहि प्रजामिषं ॥
ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषां ते सुम्नमीमहे ॥
यस्य व्रतम्पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः । यस्य व्रते
पुष्टिपतिर्निविष्टस्तँ सरस्वन्तमवसे हुवेम ॥
दिव्यँ सुपर्णं वयसम्बृहन्तमपां गर्भं वृषभमोषधीनाम् । अभीपतो
वृष्ट्या तर्पयन्तं तँ सरस्वन्तमवसे हुवेम ॥
सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतम्प्रजां
देवि दिदिड्ढि नः ॥
या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्नियै हविः
सिनीवाल्यै जुहोतन ॥
इन्द्रं वो विश्वतस्परी न्द्रं नरः ॥
असितवर्णा हरयः सुपर्णा मिहो वसाना दिवमुत्पतन्ति । त
आववृत्रन्त्सदनानि कृत्वादित्पृथिवी घृतैर्व्युद्यते ॥
हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् । शुचिभ्राजा
उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ॥
आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदम् । शिवाभिर्न
स्मयमानाभिरागात्पतन्ति मिहः स्तनयन्त्यभ्रा ॥
वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि ॥

पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानु रेजत स्वने वः । यत्क्रीडथ मरुतः ऋृष्टिमन्त आप इव सध्रियञ्चो धवध्वे ॥
अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन । दृतिँ सु कर्ष विषितं न्यञ्चँ समा भवन्तूद्वता निपादाः ॥
त्वं त्या चिदच्युताग्ने पशुर्न यवसे । धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः ॥
अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम । याश्च माया मायिनां विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो ॥
दिवो नो वृष्टिम्मरुतो ररीध्वम्प्र पिन्वत वृष्णो अश्वस्य धाराः । अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥
पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः । अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तमक्षितम् ॥
उदप्रुतो मरुतस्ताँ इयर्त वृष्टिं ये विश्वे मरुतो जुनन्ति । क्रोशाति गर्दा कन्येव तुन्ना पेरुं तुञ्जाना पत्येव जाया ॥
घृतेन द्यावापृथिवी मधुना समुक्षत पयस्वतीः कृणुताप ओषधीः । ऊर्जं च तत्र सुमतिं च पिन्वथ यत्रा नरो मरुतः सिञ्चथा मधु ॥
उदु त्यं चित्रम् ॥
और्वभृगुवच्छुचिमप्रवानवदा हुवे । अग्निँ समुद्रवाससम् ॥
आ सवँ सवितुर्यथा भगस्येव भुजिँ हुवे । अग्निँ समुद्रवाससम् ॥
हुवे वातस्वनं कविम्पर्जन्यक्रन्द्यँ सहः । अग्निँ समुद्रवाससम् ॥११॥

इति तृतीयकाण्डे प्रथमः प्रपाठकः १

अथ तृतीयकाण्डे द्वितीयः प्रपाठकः २

यो वै पव॑मानानामन्वारो॒हान्वि॒द्वान्यज॑तेऽनु पव॑माना॒ना रोह॑ति न
पव॑माने॒भ्योऽव॑ च्छिद्यते श्ये॒नोऽसि गाय॒त्रच्छ॑न्दा॒ अनु त्वार॑भे स्व॒स्ति मा॒
सं पा॑रय सुप॒र्णोऽसि त्रि॒ष्टुप्छ॑न्दा॒ अनु त्वार॑भे स्व॒स्ति मा॒ सं पा॑रय॒ सघा॑सि॒
जग॑तीच्छन्दा॒ अनु त्वार॑भे स्व॒स्ति मा॒ सं पा॑र॒येत्या॑है॒ ते वै
पव॑मानानामन्वारो॒हास्तान्य ए॒वं वि॒द्वान्यज॑तेऽनु पव॑माना॒ना रोह॑ति न
पव॑माने॒भ्योऽव॑ च्छिद्यते॒ यो वै पव॑मानस्य॒ सन्त॑तिं॒ वेद॒ सर्व॒मायु॑रेति॒ न
पु॒रायु॑षः॒ प्र मी॑यते पशु॒मान्भ॑वति वि॒न्दते॑ प्र॒जां पव॑मानस्य॒ ग्रहा॑ गृह्य॒न्तेऽथ॒
वा अ॑स्यै॒तेऽगृ॑हीता द्रोणकल॒श आ॑धव॒नीयः॑
पू॒तभृत्तान्यदगृ॑हीत्वोपाकु॒र्यात्पव॑मानं॒ वि च्छि॑न्द्या॒त्तं वि॒च्छिद्य॑मानमध्व॒र्योः
प्रा॒णोऽनु वि च्छि॑द्येतो॒ पया॒मगृ॑हीतोऽसि प्र॒जाप॑तये॒ त्वेति॑ द्रोणकल॒शम॒भि
मृ॑शे॒दिन्द्रा॑य॒ त्वेत्या॑धव॒नीयं॒ विश्वे॑भ्यस्त्वा दे॒वेभ्य॒ इति॑ पू॒तभृ॒तं पव॑मानमे॒व
तत्सं त॑नोति॒ सर्व॒मायु॑रेति॒ न पु॒रायु॑षः॒ प्र मीय॑ते पशु॒मान्भ॑वति वि॒न्दते॑
प्र॒जाम् ॥१॥

त्रीणि॒ वाव सव॑ना॒न्यथ॑ तृतीय॒ꣳ सव॑न॒मव॑ लुम्पन्त्यन॒ꣳशु कु॒र्वन्त॑
उपा॒ꣳशुꣳ हु॒त्वोपा॑ꣳशुपा॒त्रेऽꣳशुम॒वास्य॒ तं तृ॑तीयसव॒नेऽपि॒सृज्या॒भि
षु॑णुया॒द्यदा॑प्या॒यय॑ति॒ तेना॑ꣳशु॒मद्यद॑भिषु॒णोति॒ तेन॒र्जीषि सर्वा॑ण्ये॒व
तत्सव॑नान्यꣳशु॒मन्ति॑ शु॒क्रव॑न्ति स॒माव॑द्वीर्याणि करोति॒ द्वौ स॑मु॒द्रौ
वित॑तावजू॒र्यौ प॒र्याव॑र्तेते ज॒ठरे॑व॒ पादाः॑ ।
तयोः॑ पश्य॑न्तो॒ अति॑ यन्त्य॒न्यमप॑श्यन्तः॒ सेतु॒नाति॑ यन्त्य॒न्यम् ॥
द्वे द्रध॑सी स॒तती॑ वस्त॒ एकः॑ के॒शी विश्वा॒ भुव॑नानि वि॒द्वान् ।
ति॒रो॒धायै॒त्यसि॑तं॒ वसा॑नः शु॒क्रमा द॑त्ते अनु॒हाय॑ जा॒र्यै ॥
दे॒वा वै यद्य॒ज्ञेऽकु॑र्वत॒ तदसु॑रा अकुर्वत॒ ते दे॒वा ए॒तं

मृहायुज्ञमंपश्युन्तमंतन्वताग्निहोुत्रं व्रुतमंकुर्वतु तस्मांदि्द्वव्रंतः
स्यादि्द्वर्ह्यग्निहोुत्रं जुह्वंति पौर्णमासं युज्ञमंग्नीषोुमीयं पुशुमंकुर्वत दाुर्श्यं
युज्ञमांग्नेयं पुशुमंकुर्वत वैश्वदेवं प्रांतःसवुनमंकुर्वत
वरुणप्रघासान्माध्यंन्दिनुँ सर्वनँ साकमेुधान्पिंतृयुज्ञं
त्र्यंम्बकाँस्तृतीयसवुनमंकुर्वतु तमेंषामसुंरा युज्ञमुन्ववांजिगाँसुन्तं
नान्ववांयुन्तेंऽब्रुवन्नध्वर्तुव्या वा इमे देुवा अंभूवुन्निति तदंध्वुरस्यांध्वरुत्वं
ततों देुवा अभंवुन्परासुंरा य एुवं विुद्वान्त्सोमेंनु यजंते भवंत्यात्मनुा परांस्यु
भ्रातृंव्यो भवति ॥२॥

पुरिभूरुग्निं पंरिुभूरिन्द्रं परिुभूर्विश्वान्देुवान्पंरिुभूर्माँ सुह ब्रंह्मवर्चुसेनु स नंः
पवस्वु शं गवेु शं जनांयु शमर्वंते शँ रांजुन्नोषंधीभ्योऽच्छिंन्नस्य ते
रयिपते सुवीर्यंस्य रायस्पोषंस्य ददितारंः स्याम ।
तस्यं मे रास्वु तस्यं ते भक्षीयु तस्यं त इुदमुन्मृंजे ॥
प्राणायं मे वर्चोुदा वर्चंसे पवस्वा पाुणायं व्याुनायं वाुचे दंक्षक्रुतुभ्यां
चक्षुंर्भ्यां मे वर्चोुदौ वर्चंसे पवेथाँ श्रोत्रांया त्मनेऽङ्गेंभ्यु आयुंषे वीुर्यांयु
विष्णोु रिन्द्रंस्यु विश्वेंषां देुवानां जुठरंमसि वर्चोुदा मे वर्चंसे पवस्वु
कोंऽसि को नामु कस्मैं त्वा कायं त्वा यं त्वा सोमेुनातींतृपं यं त्वा
सोमेुनामींमदँ सुप्रुजाः प्रुजयां भूयासँ सुवीरों वीुरैः सुवर्चा वर्चंसा
सुपोषुः पोषैु र्विश्वेभ्यो मे रूुपेभ्यों वर्चोुदा वर्चंसे पवस्वु तस्यं मे रास्वु
तस्यं ते भक्षीयु तस्यं त इुदमुन्मृंजे ॥
बुभूंषुन्नवेंक्षेतैुष वै पात्रियंः प्रुजापंतिर्युज्ञः प्रुजापंतिुस्तमेुव तंर्पयति स एंनं
तृप्तो भूत्याभि पंवते ब्रह्मवर्चुसकामोऽवेंक्षेतैुष वै पात्रियंः प्रुजापंतिर्युज्ञः
प्रुजापंतिुस्तमेुव तंर्पयति स एंनं तृप्तो ब्रंह्मवर्चुसेनाभि पंवत

आमयाव्यवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्त आयुषाभि पवतेऽभिचरन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्या᳜ श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ताजक्प्र धन्वति ॥३॥

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृतः स्थ ते मास्मिन्यज्ञ उप ह्वयध्व मुप मा द्यावापृथिवी ह्वयेता मुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तां नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुप तिष्ठते यज्ञो वै मखो यज्ञं वाव स तदहन्तस्मा एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं तस्मा एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमाशिषमेवैतामा शास्त इन्द्रियस्य वीर्यस्यानिर्घाताय या वै देवताः सदस्यार्तिमार्पयन्ति यस्ता विद्वान्प्रसर्पति न सदस्यार्तिमार्च्छति नमोऽग्नये मखघ्न इत्याहैता वै देवताः सदस्यार्तिमार्पयन्ति ता य एवं विद्वान्प्रसर्पति न सदस्यार्तिमार्च्छति दृढे स्थः शिथिरे समीची मा᳜हसस्पात᳜ सूर्यो मा देवो दिव्याद᳜हसस्पातु वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्यो देवी द्वारौ मा मा सं ताप्तं नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्या अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर उन्निवत उदुद्वतश्च गेषं पातं मा द्यावापृथिवी अद्याह्नः सदो वै प्रसर्पन्तं पितरोऽनु प्र सर्पन्ति त एनमीश्वरा हि᳜सितोः सदः प्रसृप्य दक्षिणार्धं परेक्षेतागन्त पितरः

पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेति तेभ्य एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै ॥४॥

भक्षेहि मा विश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्याꣳ सध्यासं नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषं मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि वश्वचर्षणे शम्भूर्मयोभूः स्वस्ति मा हरिवर्ण प्र चर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन्वि बीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्मायायुषे वर्चसे ॥ वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्द स इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयाम्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ॥

आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य सङ्गथे ॥

हिन्व मे गात्रा हरिवो गणान्मे मा वि तीतृषः । शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेवाङ्नाभिमति गाः ॥

अपाम सोमममृता अभूमादर्श्म ज्योतिरविदाम देवान् । किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥

यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहाज्जातवेदा विचर्षणिः ।

पुन॑र॒ग्निश्चक्षु॑रदा॒त्पुन॒रिन्द्रो॒ बृह॒स्पतिः॑ ।
पुन॑र्मे अश्विना यु॒वं चक्षु॒रा ध॑त्तम॒क्ष्योः ॥
इ॒ष्टय॑जुषस्ते देव सोम स्तु॒तस्तो॑मस्य श॒स्तोक्थ॑स्य॒ हरि॑वत॒ इन्द्र॑पीतस्य॒
मधु॑मत॒ उप॑हूत॒स्योप॑हूतो भक्षयामि ॥
आ॒पूर्या॒ः स्था मा॑ पूरयत प्र॒जया॑ च॒ धने॑न च ॥
ए॒तत्ते॑ तत॒ ये च॒ त्वामन्वे॒ तत्ते॑ पितामह प्रपितामह॒ ये च॒ त्वामन्व॒त्र॑
पितरो यथाभा॒गं म॑न्दध्वं॒ नमो॑ वः पितरो॒ रसा॑य॒ नमो॑ वः पितर॒ः शुष्मा॑य॒
नमो॑ वः पितरो जी॒वाय॒ नमो॑ वः पितरः स्व॒धायै॒ नमो॑ वः पितरो म॒न्यवे॒
नमो॑ वः पितरो घो॒राय॒ पित॑रो॒ नमो॑ वो॒ य ए॒तस्मिँ॑ल्लो॒के स्थ
यु॒ष्माँ॑स्तेऽनु॒ यें॑ऽस्मिँ॑ल्लो॒के मां तेऽनु॒ य ए॒तस्मिँ॑ल्लो॒के स्थ यू॒यं तेषा॒ं
वसि॑ष्ठा भूयास्त॒ यें॑ऽस्मिँ॑ल्लो॒केऽहं तेषा॒ं वसि॑ष्ठो भूयास॒ं प्रजा॑पते॒ न
त्वदे॒तान्य॒न्यो विश्वा॑ जा॒तानि॒ परि॒ ता ब॑भूव यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु
व॒यँ॑ स्या॑म॒ पत॑यो र॒यीणाम् ॥
दे॒वकृ॑त॒स्यैन॑सोऽव॒यज॑नमसि मनु॒ष्य॑कृत॒स्यैन॑सोऽव॒यज॑नमसि
पि॒तृकृ॑त॒स्यैन॑सोऽव॒यज॑नमस्य॒प्सु धौ॒तस्य॑ सोम देव॒ ते नृभिः॑
सु॒तस्ये॒ष्टय॑जुषः स्तु॒तस्तो॑मस्य श॒स्तोक्थ॑स्य॒ यो भ॒क्षो अ॑श्व॒सनि॒र्यो
गो॒सनि॒स्तस्य॑ ते पि॒तृभि॑र्भ॒क्षंकृ॑त॒स्योप॑हूत॒स्योप॑हूतो भक्षयामि ॥५॥

म॒ही॒नां पयो॑ऽसि॒ विश्वे॑षां दे॒वानां॑ त॒नूर्ऋ॒ध्यास॑म॒द्य पृष॑तीना॒ं ग्रह॒ं पृष॑तीना॒ं
ग्रहो॑ऽसि॒ विष्णो॒र्हृद॑यम॒स्येक॑मिष॒ विष्णु॒स्त्वानु॒ वि च॑क्रमे भू॒तिर्द॒ध्ना घृ॒तेन॑
वर्धता॒ं तस्य॑ मे॒ष्टस्य॑ वी॒तस्य॒ द्रवि॑णमा ग॑म्या॒ज्ज्योति॑रसि वैश्वान॒रं पृश्नि॑यै
दु॒ग्धं याव॑ती॒ द्यावा॑पृथि॒वी म॑हि॒त्वा याव॑च्च स॒प्त सिन्ध॑वो वित॒स्थुः ।
ताव॑न्तमिन्द्र ते॒ ग्रहँ॑ स॒होर्जा गृ॑ह्णा॒म्यस्तृ॑तम् ॥

यत्कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वावमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाः स्युर्यत्स्कन्देद्यजमानः प्रमायुकः स्यात्पशवो वै पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णाति प्राणो वै पृषदाज्यं प्राणो वा एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति हिरण्यमवधाय गृह्णात्यमृतं वै हिरण्यं प्राणः पृषदाज्यममृतमेवास्य प्राणे दधाति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यश्वमव घ्रापयति प्राजापत्यो वा अश्वः प्राजापत्यः प्राणः स्वादेवास्मै योनेः प्राणं निर्मिमीते वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति वैष्णव्यर्चा पुनर्गृह्णाति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सं तनोति ॥६॥

देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मायुष्मत्या ऋचो मा गात तनूपात्साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसवे स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादिन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम् ॥
सा मे सत्याशीर्देवेषु भूयाद्ब्रह्मवर्चसं मागम्यात् ॥
यज्ञो बभूव स आ बभूव स प्र जज्ञे स वावृधे ।
स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन्करोतु वयꣳ स्याम पतयो रयीणाम् ॥
यज्ञो वा वै यज्ञपतिं दुहे यज्ञपतिर्वा यज्ञं दुहे स यः

स्तुतशस्त्रयोर्दोहमविद्वान्यजते तं यज्ञो दुहे स इष्ट्वा पापीयान्भवति य एनयोर्दोहं विद्वान्यजते स यज्ञं दुहे स इष्ट्वा वसीयान्भवति स्तुतस्य स्तुतमस्यूर्जं मह्यँ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यँ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादित्याहैष वै स्तुतशस्त्रयोर्दोहस्तं य एवं विद्वान्यजते दुह एव यज्ञमिष्ट्वा वसीयान्भवति ॥७॥

श्येनाय पत्वने स्वाहा वट्स्वयमभिगूर्ताय नमो विष्टम्भाय धर्मणे स्वाहा वट्स्वयमभिगूर्ताय नमः परिधये जनप्रथनाय स्वाहा वट्स्वयमभिगूर्ताय नम ऊर्जे होत्राणाँ स्वाहा वट्स्वयमभिगूर्ताय नमः पयसे होत्राणाँ स्वाहा वट्स्वयमभिगूर्ताय नमः प्रजापतये मनवे स्वाहा वट्स्वयमभिगूर्ताय नम ऋतमृतपाः सुवर्वाट्स्वाहा वट्स्वयमभिगूर्ताय नम स्तृम्पन्ताँ होत्रा मधोर्घृतस्य यज्ञपतिमृषय एनसाहुः प्रजा निर्भक्ता अनुतप्यमाना मधव्यौ स्तोकावप तौ रराध सं नस्ताभ्याँ सृजतु विश्वकर्मा घोरा ऋषयो नमो अस्त्वेभ्यः ।
चक्षुष एषां मनसश्च सन्धौ बृहस्पतये महि षद्द्युमन्नमः ।
नमो विश्वकर्मणे स उ पात्वस्मा ननन्यान्त्सोमपान्मन्यमानः ।
प्राणस्य विद्वान्त्समरे न धीर एनश्चकृवान्महि बद्ध एषाम् ॥
तं विश्वकर्मन्प्र मुञ्चा स्वस्तये ये भक्षयन्तो न वसून्यानृहुः ।
यानग्नयोऽन्वतप्यन्त धिष्णिया इयं तेषामवया दुरिष्ट्यै स्विष्टिं नस्तां कृणोतु विश्वकर्मा ॥
नमः पितृभ्यो अभि ये नो अख्यन्यज्ञकृतो यज्ञकामाः सुदेवा अकामा वो दक्षिणां न नीनिम मा नस्तस्मादेनसः पापयिष्ट ।

यावन्तो वै सदस्यास्ते सर्वे दक्षिण्यास्तेभ्यो यो दक्षिणां न नयेदैभ्यो वृश्चेत यद्वैश्वकर्मणानि जुहोति सदस्यानेव तत्प्रीणात्य स्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः ।
पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः ॥
आशीर्दाया दम्पती वाममश्नुतामरिष्टो रायः सचता ँ समोकसा ।
य आसिचत्संदुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः ॥
सर्पिर्ग्रीवी पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य ।
सहजानिर्यः सुमखस्यमान इन्द्रायाशिर ँ सह कुम्भ्यादात् ॥
आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविण ँ सवर्चसम् ।
सञ्जयन्क्षेत्राणि सहसाहमिन्द्र कृण्वानो अन्या ँ अधरान्त्सपत्नान् ॥
भूतमसि भूते मा धा मुखमसि मुखं भूयासं द्यावापृथिवीभ्यां त्वा परि गृह्णामि विश्वे त्वा देवा वैश्वानराः प्र च्यावयन्तु दिवि देवान्दृ ँहान्तरिक्षे वया ँसि पृथिव्यां पार्थिवान्ध्रुवं ध्रुवेण हविषाव सोमं नयामसि । यथा नः सर्वमिज्जगदयक्ष्म ँ सुमना असत् ॥
यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत् ।
यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन् ॥८॥

यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि त्रिपदा गायत्री गायत्रं प्रातःसवनं गायत्रियैव प्रातःसवने वज्रमन्तर्धत्त उक्थं वाचीत्याह माध्यन्दिन ँ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप्त्रैष्टुभं माध्यन्दिन ँ सवनं त्रिष्टुभैव माध्यन्दिने सवने वज्रमन्तर्धत्त उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्वरी शाक्वरो वज्रो

वज्रेणैव तृतीयसवने वज्रमन्तर्धत्ते ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः
स्याद्यो यथासवनं प्रतिगरे छन्दाँसि सम्पादयेत्तेजः प्रातःसवन
आत्मन्दधीतेन्द्रियं माध्यन्दिने सवने पशूँस्तृतीयसवन इत्युक्थंशा
इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि त्रिपदा गायत्री गायत्रं
प्रातःसवनं प्रातःसवन एव प्रतिगरे छन्दाँसि सं पादयत्यथो तेजो वै
गायत्री तेजः प्रातःसवनं तेज एव प्रातःसवन आत्मन्धत्त उक्थं
वाचीत्याह माध्यन्दिनँ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा
त्रिष्टुप्त्रैष्टुभं माध्यन्दिनँ सवनं माध्यन्दिन एव सवने प्रतिगरे छन्दाँसि
सं पादयत्यथो इन्द्रियं वै त्रिष्टुगिन्द्रियं माध्यन्दिनँ सवनमिन्द्रियमेव
माध्यन्दिने सवन आत्मन्धत्त उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य
सप्तैतान्यक्षराणि सप्तपदा शक्वरी शाक्वराः पशवो जागतं तृतीयसवनं
तृतीयसवन एव प्रतिगरे छन्दाँसि सं पादयत्यथो पशवो वै जगती
पशवस्तृतीयसवनं पशूनेव तृतीयसवन आत्मन्धत्ते यद्वै
होताध्वर्युमभ्याह्वयत आव्यमस्मिन्दधाति तद्यन्नापहनीत पुरास्य
संवत्सराद्गृह आ वेवीरञ्छोँसा मोद इवेति प्रत्याह्वयते तेनैव तदप हते
यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं प्रतीक्षते
यदभिप्रतिगृणीयाद्यथायतया समृच्छते तादृगेव तद्यदर्धर्चाल्लुप्येत यथा
धावद्भ्यो हीयते तादृगेव तत्प्रबाहुग्वा ऋत्विजामुद्गीथा उद्गीथ
एवोद्गातृणामृचः प्रणव उक्थशँसिनां प्रतिगरोऽध्वर्यूणां य एवं
विद्वान्प्रतिगृणात्यन्नाद एव भवत्यास्य प्रजायां वाजी जायत इयं वै
होतासावध्वर्युर्यदासीनः शँसत्यस्या एव तद्धोता नैत्यास्त इव
हीयमथो इमामेव तेन यजमानो दुहे यत्तिष्ठन्प्रतिगृणात्यमुष्या एव
तदध्वर्युर्नैति तिष्ठतीव ह्यसावथो अमूमेव तेन यजमानो दुहे यदासीनः

शँसति तस्मादितः प्रदानं देवा उप जीवन्ति यत्तिष्ठन्प्रतिगृणाति तस्मादमुतः प्रदानं मनुष्या उप जीवन्ति यत्प्राङासीनः शँसति प्रत्यङ्तिष्ठन्प्रतिगृणाति तस्मात्प्राचीनँ रेतो धीयते प्रतीचीः प्रजा जायन्ते यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयति पराङा वर्तते वज्रमेव तन्नि करोति ॥९॥

उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णाम्युपयामगृहीतो ऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णाम्युपयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि देवेभ्यस्त्वा विश्वदेवेभ्यस्त्वा विश्वेभ्यस्त्वा देवेभ्यो विष्णवुरुक्रमैष ते सोमस्तँ रक्षस्व तं ते दुश्चक्षा माव ख्यन्मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहि मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रम्मे पाहि भूरसि श्रेष्ठो रश्मीनाम्प्राणपाः प्राणम्मे पाहि धूरसि श्रेष्ठो रश्मीनामपानपा अपानम्मे पाहि यो न इन्द्रवायू मित्रावरुणावश्विनावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरम्पादयामि यथेन्द्राहमुत्तमश्चेतयानि ॥१०॥

प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः । यस्य त्वँ सख्यमाविथ ॥
प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् । विपां ज्योतीँषि बिभ्रते न वेधसे ॥
अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः । तिस्र

उ ते तनुवो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥
सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य । जुषेथां यज्ञं
द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥
उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो
यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥
त्रीण्यायूँषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।
ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ॥
अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा कविः । स त्रीँरेकादशाँ इह ।
यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतः । नभन्तामन्यके समे ॥
इन्द्राविष्णू दृँहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् । शतं
वर्चिनः सहस्रं च साकँ हथो अप्रत्यसुरस्य वीरान् ॥
उत माता महिषमन्ववेनदमी त्वा जहति पुत्र देवाः । अथाब्रवीद्वृत्रमिन्द्रो
हनिष्यन्त्सखे विष्णो वितरं वि क्रमस्व ॥११॥

इति तृतीयकाण्डे द्वितीयः प्रपाठकः २

अथ तृतीयकाण्डे तृतीयः प्रपाठकः ३

अग्ने तेजस्विन्तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तम्मामायुष्मन्तं
वर्चस्वन्तम्मनुष्येषु कुरु दीक्षायै च त्वा तपसश्च तेजसे जुहोमि
तेजोविदसि तेजो मा मा हासीन्माहं तेजो हासिषम्मा मां तेजो
हासी दिन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तम्मामायुष्मन्तं
वर्चस्वन्तम्मनुष्येषु कुरु ब्रह्मणश्च त्वा क्षत्रस्य चौजसे
जुहोम्यो जोविदस्योजो मा मा हासीन्माहमोजो हासिषम्मा मामोजो
हासीत्सूर्य भ्राजस्विन्भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तम्मामायुष्मन्तं

वर्चस्वन्तम्मनुष्येषु कुरु वायोश्च त्वापां च भ्राजसे जुहोमि सुवर्विदसि सुवर्मा मा हासीन्माहꣳ सुवर्हासिषम्मा माꣳ सुवर्हासी न्मयि मेधाम्मयि प्रजाम्मय्यग्निस्तेजो दधातु मयि मेधाम्मयि प्रजाम्मयीन्द्र इन्द्रियं दधातु मयि मेधाम्मयि प्रजाम्मयि सूर्यो भ्राजो दधातु ॥१॥

वायुर्हिंकर्ताग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणम्मयि दधत्वे तद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति ते देवाः प्राणभृतः प्राणम्मयि दधत्वित्याहैतदेव सर्वमात्मन्धत्त इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवाः । सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्याम्मनुष्येभ्यस्तम्मा देवा अवन्तु शोभायै पितरोऽनु मदन्तु ॥२॥

वसवस्त्वा प्र बृहन्तु गायत्रेण च्छन्दसाग्नेः प्रियम्पाथ उपेहि रुद्रास्त्वा प्र बृहन्तु त्रैष्टुभेन च्छन्दसेन्द्रस्य प्रियम्पाथ उपेह्या दित्यास्त्वा प्र बृहन्तु जागतेन च्छन्दसा विश्वेषां देवानाम्प्रियम्पाथ उपेहि मान्दासु ते शुक्र शुक्रमा धूनोमि भन्दनासु कोतनासु नूतनासु रेशीषु मेषीषु वाशीषु विश्वभृत्सु माध्वीषु ककुहासु शक्वरीषु शुक्रासु ते शुक्र शुक्रमा धूनोमि शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत ।।
ककुहꣳ रूपं वृषभस्य रोचते बृहत्सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः ।

यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहो शिक्त्वं देव सोम गायत्रेण च्छन्दसाग्नेः प्रियम्पाथो अपीहि वशी त्वं देव सोम त्रैष्टुभेन च्छन्दसेन्द्रस्य प्रियम्पाथो अपीह्य स्मत्सखा त्वं देव सोम जागतेन च्छन्दसा विश्वेषां देवानाम्प्रियम्पाथो अपीह्या नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा । इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥
दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् । परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥३॥

एतद्वा अपां नामधेयं गुह्यं यदाधावा मान्दासु ते शुक्र शुक्रमा धूनोमीत्याहापामेव नामधेयेन गुह्येन दिवो वृष्टिमव रुन्द्धे शुक्रं ते शुक्रेण गृह्णामीत्याहैतद्वा अह्नो रूपं यद्रात्रिः सूर्यस्य रश्मयो वृष्ट्या ईशतेऽह्न एव रूपेण सूर्यस्य रश्मिभिर्दिवो वृष्टिं च्यावयत्या स्मिन्नुग्रा अचुच्यवुरित्याह यथायजुरेवैतत्ककुह ँ रूपं वृषभस्य रोचते बृहदित्याहैतद्वा अस्य ककुह ँ रूपं यद्वृष्टी रूपेणैव वृष्टिमव रुन्द्धे यत्ते सोमादाभ्यं नाम जागृवीत्याहैष ह वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति परा वा एतस्यायुः प्राण एति योऽ ँशुं गृह्णात्या नः प्राण एतु परावत इत्याहायुरेव प्राणमात्मन्धत्ते ऽमृतमसि प्राणाय त्वेति हिरण्यमभि व्यनित्यमृतं वै हिरण्यमायुः प्राणोऽमृतेनैवायुरात्मन्धत्ते शतमानम्भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्य प उप स्पृशति भेषजं वा आपो भेषजमेव कुरुते ॥४॥

वायुरसि प्राणो नाम सवितुराधिपत्येऽपानम्मे दा श्चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे दा रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजाम्मे दा ऋतमसि सत्यं नामेन्द्रस्याधिपत्ये क्षत्रम्मे दा भूतमसि भव्यं नाम पितृणामाधिपत्येऽपामोषधीनां गर्भं धा ऋतस्य त्वा व्योमन ऋतस्य त्वा विभूमन ऋतस्य त्वा विधर्मण ऋतस्य त्वा सत्याय र्तस्य त्वा ज्योतिषे प्रजापतिर्विराजमपश्यत्तया भूतं च भव्यं चासृजत तामृषिभ्यस्तिरोऽदधात्तां जमदग्निस्तपसापश्यत्तया वै स पृश्नीन्कामानसृजत तत्पृश्नीनाम्पृश्नित्वं यत्पृश्नयो गृह्यन्ते पृश्नीनेव तैः कामान्यजमानोऽव रुन्द्धे वायुरसि प्राणो नामेत्याह प्राणापानावेवाव रुन्द्धे चक्षुरसि श्रोत्रं नामेत्याहायुरेवाव रुन्द्धे रूपमसि वर्णो नामेत्याह प्रजामेवाव रुन्द्ध ऋतमसि सत्यं नामेत्याह क्षत्रमेवाव रुन्द्धे भूतमसि भव्यं नामेत्याह पशवो वा अपामोषधीनां गर्भः पशूनेवाव रुन्द्ध एतावद्वै पुरुषम्परितस्तदेवाव रुन्द्ध ऋतस्य त्वा व्योमन् इत्याहेयं वा ऋतस्य व्योमेमामेवाभि जयत्यृतस्य त्वा विभूमन् इत्याहान्तरिक्षम्वा ऋतस्य विभूमान्तरिक्षमेवाभि जयत्यृतस्य त्वा विधर्मण इत्याह द्यौर्वा ऋतस्य विधर्म दिवमेवाभि जयत्यृतस्य त्वा सत्यायेत्याह दिशो वा ऋतस्य सत्यं दिश एवाभि जयत्यृतस्य त्वा ज्योतिष इत्याह सुवर्गो वै लोक ऋतस्य ज्योतिः सुवर्गमेव लोकमभि जयत्येतावन्तो वै देवलोकास्तानेवाभि जयति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठति ॥५॥

देवा वै यद्यज्ञेन नावारुन्धत तत्परैरवारुन्धत तत्पराणाम्परत्वं यत्परे गृह्यन्ते यदेव यज्ञेन नावरुन्द्धे तस्यावरुद्ध्यै यम्प्रथमं गृह्णातीममेव तेन

लोकमभि जयति यं द्वितीयमन्तरिक्षं तेन यं तृतीयममुमेव तेन लोकमभि जयति यदेते गृह्यन्त एषां लोकानामभिजित्या उत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमाँल्लोकान्पुनरिमं लोकम्प्रत्यवरोहन्ति यत्पूर्वेष्वहःस्वितः पराञ्चो गृह्यन्ते तस्मादितः पराञ्च इमे लोका यदुत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्ते तस्मादमुतोऽर्वाञ्च इमे लोकास्तस्मादयातयाम्नो लोकान्मनुष्या उप जीवन्ति ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्द्य ओषधयः सम्भवन्त्योषधयो मनुष्याणामन्नम्प्रजापतिम्प्रजा अनु प्र जायन्त इति परानन्विति ब्रूयाद्यद्गृह्णात्यद्यस्त्वौषधीभ्यो गृह्णामीति तस्माद्द्य ओषधयः सम्भवन्ति यद्गृह्णात्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मादोषधयो मनुष्याणामन्नं यद्गृह्णाति प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति तस्मात्प्रजापतिम्प्रजा अनु प्र जायन्ते ॥६॥

प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यत यज्ञं छन्दाँसि ते विष्वञ्चो व्यक्रामन्त्सोऽसुराननु यज्ञोऽपाक्रामद्यज्ञं छन्दाँसि ते देवा अमन्यन्तामी वा इदमभूवन्यद्वयँ स्म इति ते प्रजापतिमुपाधावन्त्सोऽब्रवीत्प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्र दास्यामीति स च्छन्दसां वीर्यमादाय तदेभ्यः प्रायच्छत्तदनु च्छन्दाँस्यपाक्रामञ्छन्दाँसि यज्ञस्ततो देवा अभवन्परासुरा य एवं छन्दसां वीर्यं वेदा श्रावयास्तु श्रौषडयज ये यजामहे वषट्कारो भवत्यात्मना परास्य भ्रातृव्यो भवति ब्रह्मवादिनो वदन्ति कस्मै कमध्वर्युरा श्रावयतीति च्छन्दसां वीर्यायेति ब्रूयादेतद्वै छन्दसां वीर्यमा श्रावयास्तु श्रौषडयज ये यजामहे वषट्कारो य एवं वेद सवीर्यैरेव च्छन्दोभिरर्चति यत्किं चार्चति यदिन्द्रो वृत्रमहन्नमेध्यं

तद्यद्यतीनपावपदमेध्यं तदथ कस्मादिन्द्रो यज्ञ आ
सᳪंस्थातोरित्याहुरिन्द्रस्य वा एषा यज्ञिया तनूर्यद्यज्ञस्तामेव तद्यजन्ति य
एवं वेदोपैनं यज्ञो नमति ॥७॥

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतम्पीत्वा मधु
चारु गव्यम्पितेव पुत्रमभि रक्षतादिमम् ॥
आ वृश्चयते वा एतद्यजमानोऽग्निभ्यां यदेनयोः
शृतंकृत्याथान्यत्रावभृथमवैत्यायुर्दा अग्ने हविषो जुषाण
इत्यवभृथमवैष्यञ्जुहुयादाहुत्यैवैनौ शमयति नार्तिमार्च्छति यजमानो
यत्कुसीदमप्रतीत्तम्मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये
तदेतत्तदग्ने अनृणो भवामि ।
विश्वलोप विश्वदावस्य त्वासञ्जुहोम्यग्धादेकोऽहुतादेकः समसनादेकः ।
ते नः कृण्वन्तु भेषजᳪं सदः सहो वरेण्यम् ॥
अयं नो नभसा पुरः सᳪंस्फानो अभि रक्षतु । गृहाणामसमर्त्यै बहवो नो
गृहा असन् ॥
स त्वं नो नभसस्पत ऊर्जं नो धेहि भद्रया । पुनर्नो नष्टमा कृधि पुनर्नो
रयिमा कृधि ॥
देव सᳪंस्फान सहस्रपोषस्येशिषे स नो रास्वाज्यानिᳪं रायस्पोषᳪं
सुवीर्यᳪं संवत्सरीणाᳪं स्वस्तिम् ॥
अग्निर्वाव यम इयं यमी कुसीदं वा एतद्यमस्य यजमान आ दत्ते
यदोषधीभिर्वेदिᳪं स्तृणाति यदनुपोष्य प्रयायाद्ग्रीवबद्धमेनममुष्मिँल्लोके
नेनीयेरन्यत्कुसीदमप्रतीत्तम्मयीत्युपौषतीहैव सन्यमं कुसीदं
निरवदायानृणः सुवर्गं लोकमेति यदि मिश्रमिव चरेदञ्जलिना

सक्तून्प्रदाव्ये जुहुयादेष वा अग्निर्वैश्वानरो यत्प्रदाव्यः स एवैनम्
स्वदयत्यह्नां विधान्यामेकाष्टकायामपूपं चतुःशरावम्पक्त्वा प्रातरेतेन
कक्षमुपौषेद्यदि दहति पुण्यसमम्भवति यदि न दहति पापसममेतेन ह
स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुप यन्ति यो वा
उपद्रष्टारमुपश्रोतारमनुख्यातारं विद्वान्यजते समुमुष्मिँल्लोक इष्टापूर्तेन
गच्छतेऽग्निर्वा उपद्रष्टा वायुरुपश्रोतादित्योऽनुख्याता तान्य एवं
विद्वान्यजते समुमुष्मिँल्लोक इष्टापूर्तेन गच्छतेऽयं नो नभसा पुर
इत्याहाग्निर्वै नभसा पुरोऽग्निमेव तदाहैतन्मे गोपायेति स त्वं नो
नभसस्पत इत्याह वायुर्वै नभसस्पतिर्वायुमेव तदाहैतन्मे गोपायेति देव
सँस्फानेत्याहासौ वा आदित्यो देवः सँस्फान आदित्यमेव तदाहैतन्मे
गोपायेति ॥८॥

एतं युवानम्परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण । मा नः शाप्त
जनुषा सुभागा रायस्पोषेण समिषा मदेम ॥
नमो महिम्न उत चक्षुषे ते मरुताम्पितस्तदहं गृणामि । अनु मन्यस्व
सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् ॥
देवानामेष उपनाह आसीदपां गर्भ ओषधीषु न्यक्तः । सोमस्य
द्रप्समवृणीत पूषा बृहन्नद्रिरभवत्तदेषाम् ॥
पिता वत्सानाम्पतिरघ्नियानामथो पिता महतां गर्गराणाम् । वत्सो जरायु
प्रतिधुक्पीयूष आमिक्षा मस्तु घृतमस्य रेतः ॥
त्वां गावोऽवृणत राज्याय त्वाँ हवन्त मरुतः स्वर्काः । वर्ष्मन्क्षत्रस्य
ककुभि शिश्रियाणस्ततो न उग्रो वि भजा वसूनि ॥
व्यृद्धेन वा एष पशुना यजते यस्यैतानि न क्रियन्त एष ह त्वै समृद्धेन

यजते यस्यैतानि क्रियन्तें ॥९॥

सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः । बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु ॥
यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी । अङ्गान्यह्रुता यस्यै तां देवैः समजीगमम् ॥
आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद । भूम्याश्चतस्त्रः प्रदिशस्ताभिरा वर्तया पुनः ॥
वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ । वि मातरं च पुत्रं च वि गर्भं च जरायु च । बहिस्ते अस्तु बालिति । उरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम् ॥
एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनानु प्रथताँ स्वाहा मही द्यौः पृथिवी च न इमं यज्ञम्मिमिक्षताम् । पिपृतां नो भरीमभिः ॥१०॥

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थम्मदश्च शस्यते ॥
अयं वाम्परि षिच्यते सोम इन्द्राबृहस्पती । चारुर्मदाय पीतये ॥
अस्मे इन्द्राबृहस्पती रयिं धत्तँ शतग्विनम् । अश्वावन्तँ सहस्रिणम् ॥
बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः । इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥
वि ते विष्वग्वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति । तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः ॥
त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचिँ रत्नधातमम् । गुहा

सन्तँ सुभग विश्वदर्शतं तुविष्मणसँ सुयजं घृतश्रियम् ॥
धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥
धाता प्रजाया उत राय ईशे धातेदं विश्वम्भुवनं जजान । धाता पुत्रं
यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम ॥
धाता ददातु नो रयिम्प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि
सुमतिँ सत्यराधसः ॥
धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे । तस्मै देवा
अमृताः सं व्ययन्तां विश्वे देवासो अदितिः सजोषाः ॥
अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतां
दाशुषे मयः ॥
अन्विदनुमते त्वं मन्यासै शं च नः कृधि । क्रत्वे दक्षाय नो हिनु प्र ण
आयूँषि तारिषः ॥
अनु मन्यतामनुमन्यमाना प्रजावन्तँ रयिमक्षीयमाणम् । तस्यै वयँ
हेडसि मापि भूम सा नो देवी सुहवा शर्म यच्छतु ॥
यस्यामिदम्प्रदिशि यद्विरोचतेऽनुमतिम्प्रति भूषन्त्यायवः । यस्या उपस्थ
उर्वन्तरिक्षँ सा नो देवी सुहवा शर्म यच्छतु राकामहँ सुहवाँ सुष्टुती
हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया
ददातु वीरँ शतदायमुक्थ्यम् ॥
यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो
अद्य सुमना उपागहि सहस्रपोषँ सुभगे रराणा ॥
सिनीवालि
या सुपाणिः ॥
कुहूमहँ सुभगां विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । सा नो

ददातु श्रवणम्पितृणां तस्यास्ते देवि हविषा विधेम ॥
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषश्चिकेतु । सं दाशुषे
किरतु भूरि वाम ँ रायस्पोषं चिकितुषे दधातु ॥११॥

इति तृतीयकाण्डे तृतीयः प्रपाठकः ३

अथ तृतीयकाण्डे चतुर्थः प्रपाठकः ४

वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते सूर्यो देवो दिविषद्भ्य
इत्याह बृहस्पतिना चैवास्य प्रजापतिना च यज्ञस्य व्यृद्धमपि वपति
रक्षा ँसि वा एतत्पश ँ सचन्ते यदेकदेवत्य आलब्धो भूयान्भवति
यस्यास्ते हरितो गर्भ इत्याह देवत्रैवैनां गमयति रक्षसामपहत्या आ वर्तन
वर्तयेत्याह ब्रह्मणैवैनमा वर्तयति वि ते भिनद्मि तकरीमित्याह
यथायजुरेवैत दुरुद्रप्सो विश्वरूप इन्दुरित्याह प्रजा वै पशव इन्दुः
प्रजयैवैनम्पशुभिः समर्धयति दिवं वै यज्ञस्य व्यृद्धं गच्छति
पृथिवीमतिरिक्तं तद्यन्न शमयेदार्तिमार्च्छेद्यजमानो मही द्यौः पृथिवी च न
इत्याह द्यावापृथिवीभ्यामेव यज्ञस्य व्यृद्धं चातिरिक्तं च शमयति
नार्तिमार्च्छति यजमानो भस्मनाभि समूहति स्वगाकृत्या अथो अनयोर्वा
एष गर्भोऽनयोरेवैनं दधाति यदवद्येदति तद्रेचयेद्यन्नावद्येत्पशोरालब्धस्य
नाव द्येत्पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यत्पुरस्ताद्वै नाभ्यै प्राण
उपरिष्टादपानो यावानेव पशुस्तस्याव द्यति विष्णवे शिपिविष्टाय जुहोति
यद्वै यज्ञस्यातिरिच्यते यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्टोऽतिरिक्त
एवातिरिक्तं दधात्यतिरिक्तस्य शान्त्या अष्टाप्रूड्ढिरण्यं दक्षिणाष्टापदी
ह्येषात्मा नवमः पशोराप्त्या अन्तरकोश उष्णीषेणाविष्टितम्भवत्येवमिव
हि पशुरुल्बमिव चर्मेव मा ँसमिवास्थीव यावानेव पशुस्तमाप्त्वाव

रुन्द्धे यस्यैषा यज्ञे प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान्भवति ॥१॥

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो ते
अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥
आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा
किक्किटा ते प्राणं वायवे स्वाहा किक्किटा ते चक्षुः सूर्याय स्वाहा
किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याँ स्वाहा किक्किटा ते वाचँ
सरस्वत्यै स्वाहा त्वं तुरीया वशिनी वशासि सकृद्यत्त्वा मनसा गर्भ
आशयत् । वशा त्वं वशिनी गच्छ देवान्त्सत्याः सन्तु यजमानस्य
कामाः ॥
अजासि रयिष्ठा पृथिव्याँ सीदोर्ध्वान्तरिक्षमुप तिष्ठस्व दिवि ते बृहद्भाः
।
तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥
मनसो हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाजो भूयास्म ॥२॥

इमे वै सहास्तां ते वायुर्व्यवात्ते गर्भमदधातां तँ सोमः
प्राजनयदग्निरग्रसत स एतम्प्रजापतिराग्नेयमष्टाकपालमपश्यत्तं
निरवपत्तेनैवैनामग्नेरधि निरक्रीणात्तस्मादप्यन्यदेवत्यामालभमान
आग्नेयमष्टाकपालम्पुरस्तान्निर्वपेदग्नेरेवैनामधि निष्क्रीयालभते
यद्वायुर्व्यवात्तस्माद्वायव्या यदिमे गर्भमदधातां तस्माद्द्यावापृथिव्या
यत्सोमः प्राजनयदग्निरग्रसत तस्मादग्नीषोमीया
यदनयोर्वियत्योर्वागवदत्तस्मात्सारस्वती यत्प्रजापतिरग्नेरधि

निरक्रीणात्तस्मात्प्राजापत्या सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोप धावति स एवैनम्भूतिं गमयति द्यावापृथिव्यामा लभेत कृषमाणः प्रतिष्ठाकामो दिव एवास्मै पर्जन्यो वर्षति व्यस्यामोषधयो रोहन्ति समर्धुकमस्य सस्यम्भवत्य ग्नीषोमीयामा लभेत यः कामयेतान्नवानन्नादः स्यामित्यग्निनैवान्नमव रुन्द्धे सोमेनान्नाद्यमन्नवानेवान्नादो भवति सारस्वतीमा लभेत य ईश्वरो वाचो वदितोः सन्वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति सैवास्मिन्वाचं दधाति प्राजापत्यामा लभेत यः कामयेतानभिजितमभि जयेयमिति प्रजापतिः सर्वा देवता देवताभिरेवानभिजितमभि जयति वायव्ययोपाकरोति वायोरेवैनामवरुध्या लभत आकूत्यै त्वा कामाय त्वेत्याह यथायजुरेवैतत्किंक्किटाकारं जुहोति किङ्क्किटाकारेण वै ग्राम्याः पशवो रमन्ते प्रारण्याः पतन्ति यत्किंक्किटाकारं जुहोति ग्राम्याणाम्पशूनां धृत्यै पर्यग्नौ क्रियमाणे जुहोति जीवन्तीमेवैनाँ सुवर्गं लोकं गमयति त्वं तुरीया वशिनी वशासीत्याह देवत्रैवैनां गमयति सत्याः सन्तु यजमानस्य कामा इत्याहैष वै कामो यजमानस्य यदनार्त उदृचं गच्छति तस्मादेवमाहा जासि रयिष्ठेत्याहैष्वेवैनां लोकेषु प्रति ष्ठापयति दिवि ते बृहद्भा इत्याह सुवर्ग एवास्मै लोके ज्योतिर्दधाति तन्तुं तन्वन्रजसो भानुमन्विहीत्याहेमानेवास्मै लोकाञ्ज्योतिष्मतः करोत्य नुल्बणं वयत जोगुवामप इत्याह यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्ति र्मनुर्भव जनया दैव्यं जनमित्याह मानव्यो वै प्रजास्ता एवाद्याः कुरुते मनसो हविरसीत्याह स्वगाकृत्यै गात्राणां ते गात्रभाजो

भूयास्मेत्याहाशिषमेवैतामा शास्ते तस्यै वा एतस्या एकमेवादेवयजनं यदालब्धायामभ्रो भवति यदालब्धायामभ्रः स्यादप्सु वा प्रवेशयेत्सर्वां वा प्राश्नीया द्यदप्सु प्रवेशयेद्यज्ञवेशसं कुर्यात्सर्वामेव प्राश्नीयादिन्द्रियमेवात्मन्धत्ते सा वा एषा त्रयाणामेवावरुद्धा संवत्सरसदः सहस्रयाजिनो गृहमेधिनस्त एवैतया यजेरन्तेषामेवैषाप्ता ॥३॥

चित्तं च चित्तिश्चा कूतं चा कूतिश्च विज्ञातं च विज्ञानं च मनश्च शक्वरीश्च दर्शश्च पूर्णमासश्च बृहच्च रथंतरं च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव देवासुराः संयत्ता आसन्त्स इन्द्रः प्रजापतिमुपाधावत्तस्मा एताञ्जयान्प्रायच्छत्तानजुहोत्ततो वै देवा असुरानजयन्यदजयन्तज्जयानां जयत्वँ स्पर्धमानेनैते होतव्या जयत्येव ताम्पृतनाम् ॥४॥

अग्निर्भूतानामधिपतिः स मावत्वि न्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिव श्चन्द्रमा नक्षत्राणाम्बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाँ समुद्रः स्त्रोत्याना मन्नँ साम्राज्यानामधिपति तन्मावतु सोम ओषधीनाँ सविता प्रसवानाँ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानाम्मरुतो गणानामधिपतयस्ते मावन्तु पितरः पितामहाः परेऽवरे ततास्तततामहा इह मावत । अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याम् ॥५॥

देवा वै यद्यज्ञे ऽकुर्वत तदसुरा अकुर्वत ते देवा
एतानभ्यातानानपश्यन्तानभ्यातन्वत यद्देवानां कर्मासीदार्ध्यत
तद्यदसुराणां न तदार्ध्यत येन कर्मणेत्सेत्तत्र होतव्या ऋध्नोत्येव तेन कर्मणा
यद्विश्वे देवाः समभरन्तस्मादभ्याताना वैश्वदेवा
यत्प्रजापतिर्जयान्प्रायच्छत्तस्माज्जयाः प्राजापत्याः यद्राष्ट्रभृद्भी राष्ट्रमाददत
तद्राष्ट्रभृताँ राष्ट्रभृत्त्वं ते देवा अभ्यातानैरसुरानभ्यातन्वत
जयैरजयन्राष्ट्रभृद्भी राष्ट्रमाददत यद्देवा अभ्यातानैरसुरानभ्यातन्वत
तदभ्यातानानामभ्यातानत्वं यज्जयैरजयन्तज्जयानां जयत्वं यद्राष्ट्रभृद्भी
राष्ट्रमाददत तद्राष्ट्रभृताँ राष्ट्रभृत्त्वं ततो देवा अभवन्परासुरा यो
भ्रातृव्यवान्त्स्यात्स एताञ्जुहुयदभ्यातानैरेव भ्रातृव्यानभ्यातनुते जयैर्जयति
राष्ट्रभृद्भी राष्ट्रमा दत्ते भवत्यात्मना परास्य भ्रातृव्यो भवति ॥६॥

ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदम्ब्रह्म
क्षत्रम्पातु ता इदम्ब्रह्म क्षत्रम्पान्तु तस्मै स्वाहा ताभ्यः स्वाहा संहितो
विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवः सुषुम्नः
सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो भुज्युः सुपर्णो
यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवाः प्रजापतिर्विश्वकर्मा मनो
गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नय इषिरो विश्वव्यचा वातो
गन्धर्वस्तस्यापोऽप्सरसो मुदा भुवनस्य पते यस्य त उपरि गृहा इह च ।
स नो रास्वाज्यानिँ रायस्पोषँ सुवीर्यँ संवत्सरीणाँ स्वस्तिम् ॥
परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवः सुक्षितिः
सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो
दूरेहेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवश्चारुः

कृपणकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसः शोचयन्तीर्नाम स इदम्ब्रह्म
क्षत्रम्पातु ता इदम्ब्रह्म क्षत्रम्पान्तु तस्मै स्वाहा ताभ्यः स्वाहा स नो
भुवनस्य पते यस्य त उपरि गृहा इह च । उरु ब्रह्मणेऽस्मै क्षत्राय महि
शर्म यच्छ ॥७॥

राष्ट्रकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रेणैवास्मै राष्ट्रमव रुन्द्धे राष्ट्रमेव
भवत्या त्मने होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रम्प्रजा राष्ट्रम्पशवो राष्ट्रं
यच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्रमव रुन्द्धे वसिष्ठः समानानाम्भवति
ग्रामकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रꣳ सजाता राष्ट्रेणैवास्मै राष्ट्रꣳ
सजातानव रुन्द्धे ग्राम्ये व भवत्य धिदेवने जुहोत्यधिदेवन एवास्मै
सजातानव रुन्द्धे त एनमवरुद्धा उप तिष्ठन्ते रथमुख ओजस्कामस्य
होतव्या ओजो वै राष्ट्रभृत ओजो रथ ओजसैवास्मा ओजोऽव रुन्द्ध
ओजस्व्यैव भवति यो राष्ट्रादपभूतः स्यात्तस्मै होतव्या यावन्तोऽस्य रथाः
स्युस्तान्ब्रूयाद्युङ्ध्वमिति राष्ट्रमेवास्मै युनक्त्याहुतयो वा एतस्याक्लृप्ता
यस्य राष्ट्रं न कल्पते स्वरथस्य दक्षिणं चक्रम्प्रवृह्य नाडीमभि
जुहुयादाहुतीरेवास्य कल्पयति ता अस्य कल्पमाना राष्ट्रमनु कल्पते
संग्रामे संयत्ते होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रे खलु वा एते व्यायच्छन्ते ये
संग्रामꣳ संयन्ति यस्य पूर्वस्य जुह्वति स एव भवति जयति तꣳ संग्रामं
मान्धुक इध्मो भवत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनाम्प्रति
वेष्टयन्ति य उन्माद्येत्तस्मै होतव्या गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य
उन्माद्यत्येते खलु वै गन्धर्वाप्सरसो यद्राष्ट्रभृतस्तस्मै स्वाहा ताभ्यः
स्वाहेति जुहोति तेनैवैनाञ्छमयति नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष
इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः स्व एवैनानायतने

शमयत्यभिचरता प्रतिलोमँ होतव्याः प्राणानेवास्य प्रतीचः प्रति यौति तं ततो येन केन च स्तृणुते स्वकृत इरिणे जुहोति प्रदरे वैतद्वा अस्यै निर्ऋतिगृहीतं निर्ऋतिगृहीत एवैनं निर्ऋत्या ग्राहयति यद्वाचः क्रूरं तेन वषट्करोति वाच एवैनं क्रूरेण प्र वृश्चति ताजगार्तिमार्च्छति यस्य कामयेतान्नाद्यमा ददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत इति तृणानि सं गृह्णीयात्प्रजापतिर्वै भुवनस्य पतिः प्रजापतिनैवास्यान्नाद्यमा दत्त इदमहममुष्यामुष्यायणस्यान्नाद्यँ हरामीत्याहान्नाद्यमेवास्य हरति षड्भिर्हरति षड्वा ऋतवः प्रजापतिनैवास्यान्नाद्यमादायर्तवोऽस्मा अनु प्र यच्छन्ति यो ज्येष्ठबन्धुरपभूतः स्यात्तँ स्थलेऽवसाय्य ब्रह्मौदनं चतुःशरावम्पक्त्वा तस्मै होतव्या वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलं वर्ष्मणैवैनं वर्ष्म समानानां गमयति चतुःशरावो भवति दिक्ष्वेव प्रति तिष्ठति क्षीरे भवति रुचमेवास्मिन्दधात्युद्धरति शृतत्वाय सर्पिष्वान्भवति मेध्यत्वाय चत्वार आर्षेयाः प्राश्नन्ति दिशामेव ज्योतिषि जुहोति ॥८॥

देविका निर्वपेत्प्रजाकामश्छन्दाँसि वै देविकाश्छन्दाँसीव खलु वै प्रजाश्छन्दोभिरेवास्मै प्रजाः प्र जनयति प्रथमं धातारं करोति मिथुनी एव तेन करोत्यन्वेवास्मा अनुमतिर्मन्यते राते राका प्र सिनीवाली जनयति प्रजास्वेव प्रजातासु कुह्वा वाचं दधत्येता एव निर्वपेत्पशुकामश्छन्दाँसि वै देविकाश्छन्दाँसीव खलु वै पशवश्छन्दोभिरेवास्मै पशून्प्र जनयति प्रथमं धातारं करोति प्रैव तेन वापयत्यन्वेवास्मा अनुमतिर्मन्यते राते राका प्र सिनीवाली जनयति पशूनेव प्रजातान्कुह्वा प्रति ष्ठापयत्येता एव निर्वपेद्ग्रामकामश्छन्दाँसि वै देविकाश्छन्दाँसीव खलु वै

ग्राम॒श्छन्दो॑भिरे॒वास्मै॒ ग्राम॒मव॑ रुन्द्धे मध्य॒तो धा॒तारं॑ करोति मध्य॒त ए॒वैनं॒ ग्राम॑स्य दधात्ये॒ ता ए॒व निर्व॑पे॒ज्ज्योगा॑मयावी॒ छन्दा॑ꣳसि॒ वै देवि॑का॒श्छन्दा॑ꣳसि॒ खलु॒ वा ए॒तम॒भि म॑न्यन्ते॒ यस्य॒ ज्योगा॒मय॑ति॒ च्छन्दो॑भिरे॒वैन॑मग॒दं क॑रोति मध्य॒तो धा॒तारं॑ करोति मध्य॒तो वा ए॒तस्याक्लृ॑प्तं॒ यस्य॒ ज्योगा॒मय॑ति मध्य॒त ए॒वास्य॒ तेन॑ कल्पयत्ये॒ ता ए॒व निर्व॑पे॒द्यं य॒ज्ञो नोप॒नमे॒च्छन्दा॑ꣳसि॒ वै देवि॑का॒श्छन्दा॑ꣳसि॒ खलु॒ वा ए॒तं नोप॑ नमन्ति॒ यं य॒ज्ञो नोप॒नम॑ति प्रथ॒मं धा॒तारं॑ करोति मु॒ख॒त ए॒वास्मै॑ च्छन्दा॑ꣳसि दधा॒त्युपैनं॑ य॒ज्ञो न॑मत्ये॒ ता ए॒व निर्व॑पेदीजा॒नश्छन्दा॑ꣳसि॒ वै देवि॑का या॒तया॑मानीव॒ खलु॒ वा ए॒तस्य॒ च्छन्दा॑ꣳसि॒ य ईजा॒न उ॑त्त॒मं धा॒तारं॑ करोत्यु॒परि॑ष्टादे॒वास्मै॒ छन्दा॒ꣳस्यया॑तयामा॒न्यव॑ रुन्द्ध उपैनमु॒त्त॑रो य॒ज्ञो न॑मत्ये॒ ता ए॒व निर्व॑पे॒द्यम्मे॒धा नोप॒नमे॒च्छन्दा॑ꣳसि॒ वै देवि॑का॒श्छन्दा॑ꣳसि॒ खलु॒ वा ए॒तं नोप॑ नमन्ति॒ यम्मे॒धा नोप॒नम॑ति प्रथ॒मं धा॒तारं॑ करोति मु॒ख॒त ए॒वास्मै॒ छन्दा॑ꣳसि दधा॒त्युपैनम्मे॒धा न॑मत्ये॒ ता ए॒व निर्व॑पे॒द्रुक्का॑मश्छन्दा॑ꣳसि॒ वै देवि॑का॒श्छन्दा॑ꣳसीव॒ खलु॒ वै रुक्छन्दो॑भिरे॒वास्मि॒न्रुचं॑ दधाति क्षी॒रे भ॑वन्ति॒ रुच॑मे॒वास्मि॑न्दधति मध्य॒तो धा॒तारं॑ करोति मध्य॒त ए॒वैन॑ꣳ रु॒चो द॑धाति गाय॒त्री वा अनु॒॑मतिस्त्रि॒ष्टुग्रा॒का जग॑ती सिनीवा॒ल्य॑नु॒ष्टुप्कु॒हूर्धा॒ता व॑षट्का॒रः पू॒र्वप॒क्षो रा॒काप॑रप॒क्षः कु॒हूर॑मावा॒स्या॑ सिनीवा॒ली पौर्ण॒मा॒स्यनु॒॑मतिश्च॒न्द्रमा॑ धा॒ताष्टौ वस॑वो॒ऽष्टाक्ष॑रा गाय॒त्र्येका॑दश रु॒द्रा एका॑दशाक्षरा त्रि॒ष्टुब्द्वाद॑शादि॒त्या द्वाद॑शाक्षरा॒ जग॑ती प्र॒जाप॑तिरनु॒ष्टुब्धा॒ता व॑षट्का॒र ए॒तद्वै देवि॑काः सर्वा॑णि च॒ च्छन्दा॑ꣳसि॒ सर्वा॑श्च दे॒वता॑ वषट्का॒र स्ता यत्स॒ह सर्वा॑ नि॒र्वपे॑दीश्व॒रा ए॑नम्प्र॒दहो॒ द्वे प्र॑थ॒मे नि॒रुप्य॑ धा॒तुस्तृ॒तीय॒ं निर्व॑पे॒त्तथो॑ ए॒वोत्त॑रे॒ निर्व॑पे॒त्तथैनं॒ न प्र द॑हन्त्यथो॒ यस्मै॒ कामा॑य नि॒रुप्यन्ते॒ तमे॒वाभि॒रुपा॑प्नोति ॥६॥

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शं न एधि द्विपदे शं चतुष्पदे ॥
वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या । आवः क्षेम उत योगे वरं नो यूयम्पात स्वस्तिभिः सदा नः ॥
यत्सायम्प्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव ता उप धत्ते यजमानोऽहोरात्राणि वा एतस्येष्टका य आहिताग्निर्यत्सायम्प्रातर्जुहोत्यहोरात्राण्येवाप्त्वेष्टकाः कृत्वोप धत्ते दश समानत्र जुहोति दशाक्षरा विराड्विराजमेवाप्त्वेष्टकां कृत्वोप धत्तेऽथो विराज्येव यज्ञमाप्नोति चित्यश्चित्योऽस्य भवति तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तद्यत्ततोऽर्वाचीनꣳ रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयम्प्रयायाद्रुद्र एनम्भूत्वाग्निरनूत्थाय हन्याद्वास्तोष्पतीयं जुहोति भागधेयेनैवैनꣳ शमयति नार्तिमार्च्छति यजमानो यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिं जुहोति तादृगेव तद्यदयुक्ते जुहुयाद्यथा क्षेम आहुतिं जुहोति तादृगेव तदहुतमस्य वास्तोष्पतीयꣳ स्याद्दक्षिणो युक्तो भवति सव्योऽयुक्तोऽथ वास्तोष्पतीयं जुहोत्युभयमेवाकरपरिवर्गमेवैनꣳ शमयति यदेकया जुहुयाद्दर्विहोमं कुर्यात्पुरोऽनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय यद्धुत आदध्याद्रुद्रं गृहानन्वारोहयेद्यदवक्षाणान्यसम्प्रक्षाप्य प्रयायाद्यथा यज्ञवेशसं वादहनं वा तादृगेव तदयं ते योनिरृत्विय इत्यरण्योः समारोहयत्येष वा अग्नेर्योनिः स्व एवैनं योनौ समारोहयत्यथो खल्वाहुर्यदरण्योः समारूढो नश्येदुदस्याग्निः सीदेत्पुनराधेयः स्यादिति या ते अग्ने यज्ञिया तनूस्तयेह्या रोहेत्यात्मन्त्समारोहयते यजमानो वा

अ॒ग्नेर्योनिः स्वायामे॒वैनं योन्या॑ँ स॒मारोहयते ॥१०॥

त्वम॑ग्ने बृ॒हद्वयो॒ दधासि देव दा॒शुषे । क॒विर्गृ॒हप॑ति॒र्युवा ॥
ह॒व्य॒वाडग्नि॒र॒जरः॑ पि॒ता नौ वि॒भुर्वि॒भावा सु॒दृशीको अ॒स्मे । सु॒गा॒र्ह॒प॒त्याः
समिषौ दिदीह्यस्म॒द्रिय॒क्सम्मि॑मीहि॒ श्रवा॑ँसि ॥
त्वं च॑ सोम नो॒ वशौ जी॒वातुं न म॑रामहे । प्रि॒यस्तोत्रो॒ वन॒स्पतिः ॥
ब्र॒ह्मा दे॒वाना॑म्पद॒वीः क॑व॒ीनामृषि॒र्विप्रा॑णाम्मह॒िषो मृगाणाम् । श्ये॒नो
गृध्रा॑णा॒ँ स्वधि॑ति॒र्वना॑ना॒ँ सोम॑ः प॒वित्र॒मत्यैति॒ रेभ॑न् ॥
आ वि॒श्वदे॑व॒ँ सत्प॑तिँ सू॒क्तैर॒द्या वृ॒णीमहे । स॒त्यस॑वँ सवि॒तार॑म् ॥
आ स॒त्येन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृत॒म्मर्त्यं च । हि॒र॒ण्ययेन सवि॒ता
रथे॒ना दे॒वो या॑ति॒ भुव॑ना वि॒पश्य॑न् ॥
यथा॑ नो॒ अदि॑तिः कर॒त्पश्वे नृभ्यो॒ यथा॒ गवे । यथा॑ तो॒काय॑ रु॒द्रिय॑म् ॥
मा न॑स्तो॒के तन॑ये॒ मा न॒ आयु॑षि॒ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः ।
वी॒रान्मा नौ रुद्र भामि॒तो व॑धीर्ह॒विष्म॑न्तो॒ नम॑सा विधेम ते ॥
उ॒द॒प्रुतो॒ न वयो॒ रक्ष॑माणा॒ वाव॑दतो अ॒भ्रिय॑स्येव॒ घोषा॑ः । गि॒रि॒भ्रजो॒
नोर्मयो॒ मद॑न्तो॒ बृह॒स्पति॑म॒भ्य॑र्का अ॑नावन् ॥
ह॒ँसैरि॑व॒ सखि॑भि॒र्वाव॑दद्भिरश्म॒न्मया॑नि॒ नह॑ना॒ व्यस्य॑न् ।
बृह॒स्पति॑रभि॒कनि॑क्रद॒द्गा उ॒त प्रास्तौ॒दुच्च॑ वि॒द्वाँ अ॑गायत् ॥ एन्द्र॑
सान॒सिँ र॒यिँ स॒जित्वा॑नँ सद॒ासह॑म् । वर्षि॑ष्ठमू॒तये॑ भर ॥
प्र स॑साहिषे पुरुहूत॒ शत्रू॒ञ्ज्येष्ठ॑स्ते॒ शुष्म॑ इ॒ह रा॒तिर॑स्तु । इन्द्रा भ॑र॒
दक्षि॑णेना॒ वसू॑नि॒ पति॒ः सिन्धू॑नामसि रे॒वती॑नाम् ॥
त्वँ सु॒तस्य॑ पी॒तये॑ स॒द्यो वृ॒द्धो अ॑जायथाः । इन्द्र॒ ज्यैष्ठ्या॑य सुक्रतो ॥
भुव॒स्त्वमि॑न्द्र॒ ब्रह्म॑णा म॒हान्भुवो॒ विश्वे॑षु॒ सव॑नेषु य॒ज्ञिय॑ः । भुवो॒

नृꣳश्चयौत्नो विश्वस्मिन्भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । सत्यं चित्रश्रवस्तमम् ॥
मित्रो जनान्यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभि चष्टे सत्याय हव्यं घृतवद्विधेम ॥
प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वोतो नैनमꣳहो अश्नोत्यन्तितो न दूरात् ॥
यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिमीमसि द्यविद्यवि ॥
यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहम्मनुष्याश्चरामसि । अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥
कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म । सर्वा ता वि ष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः ॥११॥

इति तृतीयकाण्डे चतुर्थः प्रपाठकः ४

अथ तृतीयकाण्डे पञ्चमः प्रपाठकः ५

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय ।
तस्यां देवा अधि संवसन्त उत्तमे नाक इह मादयन्ताम् ॥
यत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा ।
सा नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम् ॥
निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती ।
सहस्रपोषꣳ सुभगा रराणा सा न आ गन्वर्चसा संविदाना ॥
अग्नीषोमौ प्रथमौ वीर्येण वसून्रुद्रानादित्यानिह जिन्वतम् ।
माध्यꣳ हि पौर्णमासं जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथास्मभ्यꣳ सहवीराꣳ रयिं नि यच्छतम् ॥

आदित्याश्चाङ्गिरसश्चाग्नीनादधत ते दर्शपूर्णमासौ प्रैप्सन्तेषामङ्गिरसां निरुप्तꣳ हविरासीदथादित्या एतौ होमावपश्यन्तावजुहवुस्ततो वै ते दर्शपूर्णमासौ पूर्व आलभन्त दर्शपूर्णमासावालभमान एतौ होमौ पुरस्ताज्जुहुयात्साक्षादेव दर्शपूर्णमासावा लभते ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासावा लभेत य एनयोरनुलोमं च प्रतिलोमं च विद्यादित्यमावास्याया ऊर्ध्वं तदनुलोमं पौर्णमास्यै प्रतीचीनं तत्प्रतिलोमं यत्पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावा लभेतामुमपक्षीयमाणमन्वप क्षीयेत सारस्वतौ होमौ पुरस्ताज्जुहुयादमावास्या वै सरस्वत्यनुलोममेवैनावा लभतेऽमुमाप्यायमानमन्वा प्यायत आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेत्सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालं यदाग्नेयो भवत्यग्निर्वै यज्ञमुखं यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवारभ्य प्र तनुते सरस्वत्यै चरुर्भवति सरस्वते द्वादशकपालोऽमावास्या वै सरस्वती पूर्णमासः सरस्वान्तावेव साक्षादा रभत ऋध्नोत्याभ्यां द्वादशकपालः सरस्वते भवति मिथुनत्वाय प्रजात्यै मिथुनौ गावौ दक्षिणा समृद्ध्यै ॥१॥

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन्तं वसिष्ठः प्रत्यक्षम्पश्यत्सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्र वोच इति तस्मा एतान्त्स्तोमभागानब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त तस्माद्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह देवा वै क्षयो देवेभ्य एव यज्ञं प्राह प्रेतिरसि धर्माय त्वा धर्मं जिन्वेत्याह मनुष्या वै धर्मो मनुष्येभ्य एव यज्ञं प्राहान्वितिरसि दिवे त्वा दिवं जिन्वेत्याहैभ्य एव लोकेभ्यो यज्ञं प्राह विष्टम्भोऽसि वृष्ट्यै

त्वा वृष्टिं जिन्वेत्याह वृष्टिमेवाव रुन्द्धे प्रवास्यनुवासीत्याह मिथुनत्वायो शिगसि वसुभ्यस्त्वा वसूञ्जिन्वेत्याहाष्टौ वसव एकादश रुद्रा द्वादशादित्या एतावन्तो वै देवास्तेभ्य एव यज्ञं प्राहौ जोऽसि पितृभ्यस्त्वा पितृञ्जिन्वेत्याह देवानेव पितृननु सं तनोति तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्वेत्याह पितृनेव प्रजा अनु सं तनोति पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्वेत्याह प्रजा एव पशूननु सं तनोति रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्याहौषधीष्वेव पशून्प्रति ष्ठापयत्य भिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेत्याहाभिजित्या अधिपतिरसि प्राणाय त्वा प्राणं जिन्वेत्याह प्रजास्वेव प्राणान्दधाति त्रिवृदसि प्रवृदसीत्याह मिथुनत्वाय सꣳरोहोऽसि नीरोहोऽसीत्याह प्रजात्यै वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्याह प्रतिष्ठित्यै ॥२॥

अग्निना देवेन पृतना जयामि गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्यैनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्यैनान्क्रामामी न्द्रेण देवेन पृतना जयामि त्रैष्टुभेन च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण सहजान्विश्वेभिर्देवेभिः पृतना जयामि जागतेन च्छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणापरजा निन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति । यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासम् ॥३॥

ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु
गच्छेम सुकृतो वयम् ॥
आगन्म मित्रावरुणा वरेण्या रात्रीणाम्भागो युवयोर्यो अस्ति । नाकं
गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥
ये देवा यज्ञहनो यज्ञमुषोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम
सुकृतो वयम् ॥
यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति । गृहैश्च सर्वैः
प्रजयान्वग्रे सुवो रुहाणास्तरता रजाँसि ॥
ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम
सुकृतो वयम् ॥
येनेन्द्राय समभरः पयाँस्युत्तमेन हविषा जातवेदः । तेनाग्ने त्वमुत
वर्धयेमँ सजातानाँ श्रैष्ठ्य आ धेह्येनम् ॥
यज्ञहनो वै देवा यज्ञमुषः सन्ति त एषु लोकेष्वासत आददाना
विमथ्नाना यो ददाति यो यजते तस्य । ये देवा यज्ञहनः
पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाँस्तीर्त्वा
सगृहः सपशुः सुवर्गं लोकमेत्यप वै सोमेनेजानाद्देवताश्च यज्ञश्च
क्रामन्त्याग्नेयम्पञ्चकपालमुदवसानीयं निर्वपेदग्निः सर्वा देवताः पाङ्क्तो
यज्ञो देवताश्चैव यज्ञं चाव रुन्द्धे गायत्रो वा अग्निर्गायत्रच्छन्दास्तं छन्दसा
व्यर्धयति यत्पञ्चकपालं करोत्यष्टाकपालः कार्योऽष्टाक्षरा गायत्री
गायत्रोऽग्निर्गायत्रच्छन्दाः स्वेनैवैनं छन्दसा समर्धयति पङ्क्त्यौ
याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेनैव यज्ञान्नैति ॥४॥

सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षुषः ।

सद्व शूष सवितर्विश्वचर्षण एतेभिः सोम नामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते ।
अहम्परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार । यदन्तरिक्षं तदु मे पिताभूदहꣳ सूर्यमुभयतो ददर्शाहम्भूयासमुत्तमः समानानामा समुद्रादान्तरिक्षात्प्रजापतिरुदधिं च्यावयातीन्द्रः प्र स्नौतु मरुतो वर्षयन्तू न्नम्भय पृथिवीम्भिन्द्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् ॥
पशवो वा एते यदादित्य एष रुद्रो यदग्निरोषधीः प्रास्याग्नावादित्यं जुहोति रुद्रादेव पशूनन्तर्दधात्यथो ओषधीष्वेव पशून्प्रति ष्ठापयति कविर्यज्ञस्य वि तनोति पन्थां नाकस्य पृष्ठे अधि रोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान् ॥
यास्ते विश्वाः समिधः सन्त्यग्ने याः पृथिव्याम्बर्हिषि सूर्ये याः । तास्ते गच्छन्त्वाहुतिं घृतस्य देवायते यजमानाय शर्म ॥
आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठ ॥५॥

सं त्वा नह्यामि पयसा घृतेन सं त्वा नह्याम्यप ओषधीभिः । सं त्वा नह्यामि प्रजयाहमद्य सा दीक्षिता सनवो वाजमस्मे ॥
प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु ।
अथाहमनुकामिनी स्वे लोके विशा इह ।
सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ॥
इमं वि ष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ

सुकृतस्य लोके स्योनम्मे सह पत्या करोमि ॥
प्रेह्युदेह्यृतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यं ददताꣳ रुद्रावसृष्टासि युवा नाम मा मा हिꣳसी र्वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीः सादयामि विश्वस्य ते विश्वावतो वृष्णियावतः तवाग्ने वामीरनु संदृशि विश्वा रेताꣳसि धिषीया गन्देवान्यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमा तिष्ठतानु । वातस्य पत्मन्निड ईडिताः ॥६॥

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः परापतत्स पृथिवीम्प्राविशत्स खदिरोऽभवद्यस्य खादिरः स्रुवो भवति च्छन्दसामेव रसेनाव द्यति सरसा अस्याहुतयो भवन्ति तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत्तत्पर्णस्य पर्णत्वं यस्य पर्णमयी जुहूर्भवति सौम्या अस्याहुतयो भवन्ति जुषन्तेऽस्य देवा आहुती देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत्सुश्रवा वै नाम यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति ब्रह्म वै पर्णो विण्मरुतोऽन्नं विण्मारुतोऽश्वत्थो यस्य पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्ब्रह्मणैवान्नमव रुन्द्धेऽथो ब्रह्मैव विश्यध्यूहति राष्ट्रं वै पर्णो विडश्वत्थो यत्पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्राष्ट्रमेव विश्यध्यूहति प्रजापतिर्वा अजुहोत्सा यत्राहुतिः प्रत्यतिष्ठत्ततो विकङ्कत उदतिष्ठत्ततः प्रजा असृजत यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रैव जायत एतद्वै स्रुवाꣳ रूपं यस्यैवꣳ रूपाः स्रुचो भवन्ति सर्वाण्येवैनꣳ रूपाणि पशूनामुप तिष्ठन्ते नास्यापरूपमात्मञ्जायते ॥७॥

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यो दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वापेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहि प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भुतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि ॥८॥

यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आ वृश्च्येते प्राजापत्यं दधिग्रहं गृह्णीयात्प्रजापतिः सर्वा देवता देवताभ्य एव नि ह्नुवाते ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यते ज्यैष्ठ्यमेव गच्छति सर्वासां वा एतद्देवतानाꣳ रूपं यदेष ग्रहो यस्यैष गृह्यते सर्वाण्येवैनꣳ रूपाणि पशूनामुप तिष्ठन्त उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीत्याह ज्योतिरेवैनꣳ समानानां करोत्यग्निजिह्वेभ्यस्त्वर्तायुभ्य इत्याहैतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्यपेन्द्र द्विषतो मन इत्याह भ्रातृव्यापनुत्त्यै प्राणाय त्वापानाय त्वेत्याह प्राणानेव यजमाने दधाति तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमीत्याह प्रजापतिः सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोत्याज्यग्रहं गृह्णीयात्तेजस्कामस्य तेजो वा आज्यं तेजस्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्य ब्रह्मवर्चसं वै सोमो ब्रह्मवर्चस्येव भवति दधिग्रहं गृह्णीयात्पशुकामस्योग्वै दध्यूर्क्पशव ऊर्जैवास्मा ऊर्जम्पशूनव रुन्द्धे ॥९॥

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः । स्वादोः स्वादीयः
स्वादुना सृजा समत ऊ षु मधु मधुनाभि योधि ॥
उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा ।
प्राणग्रहान्गृह्णात्येतावद्वा अस्ति यावदेते ग्रहाः स्तोमाश्छन्दाँसि पृष्ठानि
दिशो यावदेवास्ति तदव रुन्द्धे ज्येष्ठा वा एतान्ब्राह्मणाः पुरा
विद्वामक्रन्तस्मात्तेषाँ सर्वा दिशोऽभिजिता अभूवन्यस्यैते गृह्यन्ते
ज्यैष्ठ्यमेव गच्छत्यभि दिशो जयति पञ्च गृह्यन्ते पञ्च दिशः सर्वास्वेव
दिक्ष्वृध्नुवन्ति नवनव गृह्यन्ते नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु
दधति प्रायणीये चोदयनीये च गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणैरेव प्र
यन्ति प्राणैरुद्यन्ति दशमेऽहन्गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणेभ्यः खलु वा
एतत्प्रजा यन्ति यद्वामदेव्यं योनेश्च्यवते दशमे ऽहन्वामदेव्यं योनेश्च्यवते
यद्दशमेऽहन्गृह्यन्ते प्राणेभ्य एव तत्प्रजा न यन्ति ॥१०॥

प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषक् ॥
अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते । रथो न योरभीवृतो घृणीवाञ्चेतति
त्मना ॥
अयमग्निरुरुष्यत्यमृतादिव जन्मनः । सहसश्चित्सहीयान्देवो जीवातवे
कृतः ॥
इडायास्त्वा पदे वयं नाभा पृथिव्या अधि । जातवेदो नि धीमह्यग्ने
हव्याय वोढवे अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तम्प्रथमः सीद योनिम्
। कुलायिनं घृतवन्तँ सवित्रे यज्ञं नय यजमानाय साधु ॥
सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञँ सुकृतस्य योनौ ।

देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥
नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥
त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता । अग्ने तोकस्य
नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः ॥
अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन्भागमीमहे ॥
मही द्यौः पृथिवी च न इमं यज्ञम्मिमिक्षताम् । पिपृतां नो भरीमभिः ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणम्पुरंदरम् ॥
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयँ रणेरणे ॥
उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनंजयो रणेरणे ॥
आ यँ हस्ते न खादिनँ शिशुं जातं न बिभ्रति । विशामग्निँ
स्वध्वरम् ॥
प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ नि षीदतु ॥
आ जातं जातवेदसि प्रियँ शिशीतातिथिम् । स्योन आ गृहपतिम् ॥
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः ॥
त्वँ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे ॥
तम्मर्जयन्त सुक्रतुम्पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह
नाकम्महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ॥११॥

इति तृतीयकाण्डे पञ्चमः प्रपाठकः ॥५॥

इति तृतीयं काण्डं सम्पूर्णम् ३

# अथ चतुर्थं काण्डं ४

## अथ चतुर्थकाण्डे प्रथमः प्रपाठकः ॥१॥

युञ्जानः प्रथमम्मनस्तत्वाय सविता धियः । अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥
युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवम् । बृहज्ज्योतिः करिष्यतः सविता प्र सुवाति तान् ॥ युक्तेन मनसा वयं देवस्य सवितुः सवे । सुवर्गेयाय शक्त्यै ॥
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥
युजे वाम्ब्रह्म पूर्व्यं नमोभिर्वि श्लोका यन्ति पथ्येव सूराः । शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥
यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः । यः पार्थिवानि विममे स एतशो रजाँसि देवः सविता महित्वना ॥
देव सवितः प्र सुव यज्ञम्प्र सुव यज्ञपतिम्भगाय दिव्यो गन्धर्वः । केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः ॥
इमं नो देव सवितर्यज्ञम्प्र सुव देवायुवँ सखिविदँ सत्राजितं धनजितँ सुवर्जितम् ॥
ऋचा स्तोमँ समर्धय गायत्रेण रथंतरम् । बृहद्गायत्रवर्तनि ॥
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यां गायत्रेण च्छन्दसा ददेऽङ्गिरस्व दभ्रिरसि नारिरसि पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वदा भर त्रैष्टुभेन त्वा छन्दसा ददेऽङ्गिरस्व द्भ्रिरसि नारिरसि त्वया वयँ सधस्थ आग्निँ शकेम खनितुम्पुरीष्यं जागतेन त्वा छन्दसा ददे ऽङ्गिरस्व द्धस्त आधाय सविता

बिभ्रदभ्रिँ हिरण्ययीम् । तया ज्योतिरजस्रमिदग्निं खात्वी न आ भरानुष्टुभेन त्वा छन्दसा ददेऽङ्गिरस्वत् ॥१॥

इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्या । तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती ॥
प्रतूर्तं वाजिन्ना द्रव वरिष्ठामनु संवतम् । दिवि ते जन्म परममन्तरिक्षे नाभिः पृथिव्यामधि योनिः ॥
युञ्जाथाँ रासभं युवमस्मिन्यामे वृषण्वसू । अग्निम्भरन्तमस्मयुम् ॥
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥
प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि ।
उर्वन्तरिक्षमन्विहि स्वस्तिगव्यूतिरभयानि कृण्वन् ॥
पूष्णा सयुजा सह । पृथिव्याः
सधस्थादग्निम्पुरीष्यमङ्गिरस्वदच्छेह्य ग्निम्पुरीष्यमङ्गिरस्वदच्छेमो ऽग्निम्पुरीष्यमङ्गिरस्वद्भरिष्यामोऽग्निम्पुरीष्यमङ्गिरस्वद्भरामः ॥
अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततान ॥
आगत्य वाज्यध्वनः सर्वा मृधो वि धूनुते । अग्निँ सधस्थे महति चक्षुषा नि चिकीषते ॥
आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम् । भूम्या वृत्वाय नो ब्रूहि यतः खनाम तं वयम् ॥
द्यौस्ते पृष्ठम्पृथिवी सधस्थमात्मान्तरिक्षँ समुद्रस्ते योनिः । विख्याय चक्षुषा त्वमभि तिष्ठ पृतन्यतः ॥
उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन् । वयँ स्याम

सुमतौ पृथिव्या अग्निं खनिष्यन्त उपस्थे अस्याः ॥
उदक्रमीद्द्रविणोदा वाज्यर्वाकः स लोकँ सुकृतम्पृथिव्याः । ततः
खनेम सुप्रतीकमग्निँ सुवो रुहाणा अधि नाक उत्तमे ॥
अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासाँ
स्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥
जिघर्म्यग्निम्मनसा घृतेन प्रतिक्ष्यन्तम्भुवनानि विश्वा । पृथुं तिरश्चा वयसा
बृहन्तं व्यचिष्ठमन्नँ रभसं विदानम् ॥
आ त्वा जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषस्व । मर्यश्रीः
स्पृहयद्वर्णो अग्निर्नाभिमृशे तनुवा जर्हृषाणः ॥
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥
परि त्वाग्ने पुरं वयं विप्रँ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे
भेत्तारम्भङ्गुरावतः ॥
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं
वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥२॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्पृथिव्याः
सधस्थेऽग्निम्पुरीष्यमङ्गिरस्वत्खनामि ॥
ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम् ।
शिवम्प्रजाभ्योऽहिँसन्तम्पृथिव्याः सधस्थेऽग्निम्पुरीष्यमङ्गिरस्वत्खनामि
॥
अपाम्पृष्ठमसि सप्रथा उर्वग्निम्भरिष्यदपरावपिष्ठम् । वर्धमानम्मह आ च
पुष्करं दिवो मात्रया वरिणा प्रथस्व ॥
शर्म च स्थो वर्म च स्थो अच्छिद्रे बहुले उभे । व्यचस्वती सं

वसाथाम्भर्तमग्निम्पुरीष्यम् ॥
सं वसाथाꣳ सुवर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती
ज्योतिष्मन्तमजस्रमित् ॥
पुरीष्योऽसि विश्वभराः । अथर्वा त्वा प्रथमो निरमन्थदग्ने ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । वृत्रहणम्पुरं दरम् ॥
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयꣳ रणेरणे ॥
सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ ।
देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ॥
नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥
सꣳ सीदस्व महाꣳ असि शोचस्व देववीतमः । वि धूममग्ने
अरुषम्मियेध्य सृज प्रशस्त दर्शतम् ॥
जनिष्वा हि जेन्यो अग्रे अह्नाꣳ हितो हितेष्वरुषो वनेषु । दमेदमे सप्त
रत्ना दधानोऽग्निर्होता नि षसादा यजीयान् ॥३॥

सं ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं यद्विलिष्टम् । देवानां यश्चरति
प्राणथेन तस्मै च देवि वषडस्तु तुभ्यम् ॥
सुजातो ज्योतिषा सह शर्म वरूथमासदः सुवः । वासो अग्ने विश्वरूपꣳ
सं व्ययस्व विभावसो ॥
उदु तिष्ठ स्वध्वरावा नो देव्या कृपा । दृशे च भासा बृहता
सुशुक्वनिराग्ने याहि सुशस्तिभिः ॥ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न
सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परि
तमाँस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः ॥
स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः
पुरीषवाहनः ॥
शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभि
शूशुचो मान्तरिक्षम्मा वनस्पतीन् ॥
प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निम्पुरीष्यम्मा पाद्यायुषः
पुरा ॥
रासभो वां कनिक्रदत्सुयुक्तो वृषणा रथे । स वामग्निम्पुरीष्यमाशुर्दूतो
वहादितः ॥
वृषाग्निं वृषणम्भरन्नपां गर्भँ समुद्रियम् । अग्न आ याहि वीतय ऋतँ
सत्यम् ॥
ओषधयः प्रति गृह्णीताग्निमेतँ शिवमायन्तमभ्यत्र युष्मान् ।
व्यस्यन्विश्वा अमतीररातीर्निषीदन्नो अप दुर्मतिँ हनत् ॥
ओषधयः प्रति मोदध्वमेनम्पुष्पावतीः सुपिप्पलाः । अयं वो गर्भ
ऋत्वियः प्रत्नँ सधस्थमासदत् ॥४॥

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहँ सुहवस्य प्रणीतौ ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥
यो वः शिवतमो रसस्तस्य भाजयतेऽह नः । उशतीरिव मातरः ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥
मित्रः सँसृज्य पृथिवीम्भूमिं च ज्योतिषा सह । सुजातं जातवेदसमग्निं

वैश्वानरं विभुम् ॥
अयन्माय त्वा सँ सृजामि प्रजाभ्यः । विश्वे त्वा देवा वैश्वानराः सँ
सृजन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥
रुद्राः सम्भृत्य पृथिवीम्बृहज्ज्योतिः समीधिरे । तेषाम्भानुरजस्र इच्छुक्रो
देवेषु रोचते ॥
सँसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्याम्मृदम् । हस्ताभ्याम्मृद्वीं कृत्वा
सिनीवाली करोतु ताम् ॥
सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह्योखां
दधातु हस्तयोः ॥
उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया । माता पुत्रं यथोपस्थे
साग्निम्बिभर्तु गर्भ आ ॥
मखस्य शिरोऽसि यज्ञस्य पदे स्थः ।
वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसाङ्गिरस्वत्पृथिव्यसि रुद्रास्त्वा
कृण्वन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वदन्तरिक्षमस्या दित्यास्त्वा कृण्वन्तु
जागतेन च्छन्दसाङ्गिरस्वद्द्यौरसि विश्वे त्वा देवा वैश्वानराः
कृण्वन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वद्दिशोऽसि ध्रुवासि धारया मयि प्रजाँ
रायस्पोषं गौपत्यँ सुवीर्यँ सजातान्यजमानाया दित्यै
रास्नास्य दितिस्ते बिलं गृह्णातु पाङ्क्तेन च्छन्दसाङ्गिरस्वत् ।
कृत्वाय सा महीमुखाम्मृन्मयीं योनिमग्नये । ताम्पुत्रेभ्यः
सम्प्रायच्छददितिः श्रपयानिति ॥५॥

वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाङ्गिरस्व द्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन
च्छन्दसाङ्गिरस्व दादित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाङ्गिरस्व द्विश्वे

त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्व दिन्द्रस्त्वा धूपयत्वङ्गिरस्वद्विष्णुस्त्वा धूपयत्वङ्गिरस्वद्वरुणस्त्वा धूपयत्वङ्गिरस्व ददितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत्खनत्ववट देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधतूखे धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीन्धतामुखे ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयन्तूखे वरूत्रयो जनयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत्पचन्तूखे ।

मित्रैतामुखाम्पचैषा मा भेदि ।

एतां ते परि ददाम्यभित्त्यै अभीमां महिना दिवम्मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ॥

मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम् ॥

देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्या ॥

अपद्यमाना पृथिव्याशा दिश आ पृण । उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम् ॥

वसवस्त्वाच्छृन्दन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्व दादित्यास्त्वाच्छृन्दन्तु जागतेन च्छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आ च्छृन्दन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥६॥

समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या । सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशः पृथिव्याः ॥

सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय । मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत । अनेशन्नस्येषव
आभुरस्य निषङ्गथिः ॥
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान्विश्वतस्त्वमयक्ष्मया
परि भुज ॥
नमस्ते अस्त्वायुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां
तव धन्वने ॥
परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्नि
धेहि तम् ॥१॥

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो
हरिकेशेभ्यः पशूनाम्पतये नमो नमः सस्पिञ्जराय त्विषीमते
पथीनाम्पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानाम्पतये नमो नमो
हरिकेशायोपवीतिने पुष्टानाम्पतये नमो नमो भवस्य हेत्यै जगताम्पतये
नमो नमो रुद्रायाततविने क्षेत्राणाम्पतये नमो नमः सूतायाहन्त्याय
वनानाम्पतये नमो नमो रोहिताय स्थपतये वृक्षाणाम्पतये नमो नमो
मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमो नमो भुवन्तये
वारिवस्कृतायौषधीनाम्पतये नमो नम उच्चैर्घोषायाक्रन्दयते
पत्तीनाम्पतये नमो नमः कृत्स्नवीताय धावते सत्वनाम्पतये नमः ॥२॥

नमः सहमानाय निव्याधिन आव्याधिनीनाम्पतये नमो नमः ककुभाय
निषङ्गिणे स्तेनानाम्पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणाम्पतये
नमो नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमो नमो निचेरवे
परिचरायारण्यानाम्पतये नमो नमः सृकाविभ्यो जिघाँसद्भ्यो

मुष्णताम्पतये नमो नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानाम्पतये नमो
नम उष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमो नम इषुमद्भ्यो
धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो
नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो
नम आसीनेभ्यः शयानेभ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो
नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो
नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः ॥३॥

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम
उगणाभ्यस्तृँहतीभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो
नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो
नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः
क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यो
रथपतिभ्यश्च वो नमो नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमः
क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो
नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो
नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यः श्वनिभ्यश्च वो
नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥४॥

नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो
नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च
नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च
नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते

च वर्षीयसे च नमो वृद्धाय च संवृध्वने च नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च ॥५॥

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च
नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥६॥

नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥७॥

नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गाय च

पशुपत॑ये च नम॑ उग्राय॑ च भीमाय॑ च नमो॑ अग्रेवधाय॑ च दूरेवधाय॑ च नमो॑ हन्त्रे च हनी॑यसे च नमो॑ वृक्षेभ्यो हरि॑केशेभ्यो नम॑स्ताराय नम॑ः शम्भवे॑ च मयोभवे॑ च नम॑ः शङ्कराय॑ च मयस्कराय॑ च नम॑ः शिवाय॑ च शिवत॑राय च नमस्तीर्थ्या॑य च कूल्या॑य च नम॑ः पार्या॑य चावार्या॑य च नम॑ः प्रतर॑णाय चोत्तर॑णाय च नम॑ आतार्या॑य चालाद्या॑य च नमः शष्प्या॑य च फेन्या॑य च नम॑ः सिकत्या॑य च प्रवाह्या॑य च ॥८॥

नम॑ इरिण्या॑य च प्रपथ्या॑य च नम॑ः किꣳशिलाय॑ च क्षय॑णाय च नम॑ः कपर्दिने॑ च पुलस्तये॑ च नमो गोष्ठ्या॑य च गृह्या॑य च नमस्तल्प्या॑य च गेह्या॑य च नम॑ः काट्या॑य च गह्वरेष्ठाय॑ च नमो॑ ह्रदय्या॑य च निवेष्प्या॑य च नम॑ः पाꣳसव्या॑य च रजस्या॑य च नमः शुष्क्या॑य च हरित्या॑य च नमो लोप्या॑य चोलप्या॑य च नम॑ ऊर्व्या॑य च सूर्म्या॑य च नम॑ः पर्ण्या॑य च पर्णशद्या॑य च नमो॑ऽपगुरमा॑णाय चाभिघ्नते च नम॑ आक्खिदते च॑ प्रक्खिदते च नमो॑ वः किरिकेभ्यो॑ देवानाꣳ हृद॑येभ्यो नमो॑ विक्षीणकेभ्यो नमो॑ विचिन्वत्केभ्यो नम॑ आनिर्हतेभ्यो नम॑ आमीवत्केभ्य॑ः ॥९॥

द्रापे अन्ध॑सस्पते दरि॑द्रन्नील॑लोहित । एषाम्पुरु॑षाणामेषाम्प॑शूनाम्मा भेर्मारो मो ए॑षां किं चनाम॑मत् ॥
या ते॑ रुद्र शिवा तनूः शिवा विश्वाह॑भेषजी । शिवा रुद्रस्य॑ भेषजी तया॑ नो मृड जीवसे ॥
इमाꣳ रुद्राय॑ तवसे॑ कपर्दिने॑ क्षयद्वी॑राय प्र भ॑रामहे मतिम् । यथा॑ नः

शमसंदि्द्वपदे चतुंष्पदे विश्वंम्पुष्टं ग्रामें अस्मि न्ननांतुरम् ॥
मृडा नों रुद्रोत नो मयंस्कृधि क्षयद्वींराय नमंसा विधेम ते । यच्छं च
योश्च मनुंरायजे पिता तदंश्याम तवं रुद्र प्रणींतौ ॥
मा नों महान्तंमुत मा नों अर्भकम्मा न उक्षंन्तमुत मा नं उक्षितम् । मा
नों वधीः पितरम्मोत मातरंम्प्रिया मा नंस्तनुवों रुद्र रीरिषः ॥
मा नंस्तोके तनंये मा न आयुंषि मा नो गोषु मा नो अश्वेंषु रीरिषः ।
वीरान्मा नों रुद्र भामितो वंधीर्हविष्मंन्तो नमंसा विधेम ते ॥
आरात्तें गोघ्न उत पूंरुषघ्ने क्षयद्वींराय सुम्नमस्मे तें अस्तु । रक्षां च नो
अधिं च देव ब्रूह्यधां च नः शर्मं यच्छ द्विबर्हाः ॥
स्तुहि श्रुतं गंर्तसदं युवांनम्मृगं न भीममुंपहत्नुमुग्रम् । मृडा जंरित्रे रुंद्र
स्तवांनो अन्यं तें अस्मन्नि वंपन्तु सेनांः ॥
परिं णो रुद्रस्यं हेतिर्वृंणक्तु परिं त्वेषस्यं दुर्मतिरंघायोः । अवं स्थिरा
मघवंद्भ्यस्तनुष्व मीढ्वंस्तोकाय तनंयाय मृडय ॥
मीढुंष्टम शिवंतम शिवो नंः सुमनां भव । परमे वृक्ष आयुंधं निधाय
कृत्तिं वसांन आ चंर पिनांकं बिभ्रदा गंहि ॥
विकिंरिद विलोंहित नमंस्ते अस्तु भगवः । यास्तें सहस्रँं
हेतयोऽन्यमस्मन्नि वंपन्तु ताः ॥
सहस्रांणि सहस्रधा बांहुवोस्तवं हेतयंः । तासामीशांनो भगवः
पराचीना मुखां कृधि ॥१०॥

सहस्रांणि सहस्रो ये रुद्रा अधि भूम्यांम् । तेषाँं सहस्रयोजनेऽव
धन्वांनि तन्मसि ॥
अस्मिन्मंहत्यंर्णवेंऽन्तरिंक्षे भवा अधिं ।

नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ॥
नीलग्रीवाः शितिकण्ठा दिवँ रुद्रा उपश्रिताः ।
ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः ।
ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
ये पथाम्पथिरक्षय ऐलबृदा यव्युधः ।
ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ।
य एतावन्तश्च भूयाँसश्च दिशो रुद्रा वितस्थिरे । तेषाँ सहस्रयोजनेऽव
धन्वानि तन्मसि ॥
नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो
वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश
प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो
द्वेष्टि तं वो जम्भे दधामि ॥११॥

इति चतुर्थकाण्डे पञ्चमः प्रपाठकः ५

अथ चतुर्थकाण्डे षष्ठः प्रपाठकः ६

अश्मन्नूर्जम्पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे । अद्भ्य
ओषधीभ्यो वनस्पतिभ्योऽधि सम्भृतां तां न इषमूर्जं धत्त मरुतः
सँरराणाः ॥
अश्मँस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्मः ॥
समुद्रस्य त्वावाकयाग्ने परि व्ययामसि । पावको अस्मभ्यँ शिवो भव
॥
हिमस्य त्वा जरायुणाग्ने परि व्ययामसि । पावको अस्मभ्यँ शिवो भव

॥
उप ज्मन्नुप वेतसेऽवत्तरं नदीष्वा । अग्ने पित्तमपामसि ॥
मण्डूकि ताभिरा गहि सेमं नो यज्ञम् । पावकवर्णं शिवं कृधि ॥
पावक आ चितयन्त्या कृपा । क्षामन्रुरुच उषसो न भानुना ॥
तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे । न ततृषाणो अजरः ॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च ॥
स नः पावक दीदिवोऽग्ने देवाँ इहावह । उप यज्ञँ हविश्च नः ॥
अपामिदं न्ययनँ समुद्रस्य निवेशनम् । अन्यं ते अस्मत्तपन्तु हेतयः
पावको अस्मभ्यँ शिवो भव ॥
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्यं ते अस्मत्तपन्तु हेतयः
पावको अस्मभ्यँ शिवो भव ॥
नृषदे वडप्सुषदे वड्वनसदे वड्बर्हिषदे वट्सुवर्विदे वट् ॥
ये देवा देवानां यज्ञिया यज्ञियानाँ संवत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं जुहुध्वम्मधुनो घृतस्य ॥
ये देवा देवेष्वधि देवत्वमायन्ये ब्रह्मणः पुरएतारो अस्य । येभ्यो नर्ते
पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुषु ॥
प्राणदा अपानदा व्यानदाश्चक्षुर्दा वर्चोदा वरिवोदाः । अन्यं ते
अस्मत्तपन्तु हेतयः पावको अस्मभ्यँ शिवो भव ॥
अग्निस्तिग्मेन शोचिषा यँसद्विश्वं न्यत्रिणम् । अग्निर्नो वँसते रयिम् ॥
सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठः स्वस्ति । अदब्धो
गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥१॥

य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसादा पिता नः । स आशिषा

द्रविणमिच्छमानः परमच्छदो वर आ विवेश ॥
विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत सन्दृक् ।
तेषामिष्टानि समिषा मदन्ति यत्र सप्तर्षीन्पर एकमाहुः ॥
यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सज्जजान ।
यो देवानां नामधा एक एव तँ सम्प्रश्नम्भुवना यन्त्यन्या ॥
त आयजन्त द्रविणँ समस्मा ऋषयः पूर्वे जरितारो न भूना । असूर्ता
सूर्ता रजसो विमाने ये भूतानि समकृण्वन्निमानि ॥
न तं विदाथ य इदं जजानान्यद्युष्माकमन्तरम्भवाति । नीहारेण प्रावृता
जल्प्या चासुतृप उक्थशासश्चरन्ति ॥
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्गुहा यत् । कँ स्विद्गर्भं
प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ॥
तमिद्गर्भम्प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे । अजस्य
नाभावध्येकमर्पितं यस्मिन्निदं विश्वम्भुवनमधि श्रितम् ॥
विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः । तृतीयः पिता
जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥
चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने । यदेदन्ता
अददृँहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् । सम्बाहुभ्यां
नमति सम्पतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥
किँ स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्किमासीत् । यदी भूमिं
जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥
किँ स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥

या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा । शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तनुवं जुषाणः ॥
वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे अद्या हुवेम । स नो नेदिष्ठा हवनानि जोषते विश्वशम्भूरवसे साधुकर्मा ॥
विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व तनुवं जुषाणः । मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकम्मघवा सूरिरस्तु ॥
विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥
समुद्राय वयुनाय सिन्धूनाम्पतये नमः । नदीनाꣳ सर्वासाम्पित्रे जुहुता विश्वकर्मणे विश्वाहामर्त्यꣳ हविः ॥२॥

उदेनमुत्तरां नयाग्ने घृतेनाहुत । रायस्पोषेण सꣳ सृज प्रजया च धनेन च ॥
इन्द्रेमम्प्रतरां कृधि सजातानामसद्वशी । समेनं वर्चसा सृज देवेभ्यो भागधा असत् ॥
यस्य कुर्मो हविर्गृहे तमग्ने वर्धया त्वम् । तस्मै देवा अधि ब्रवन्नयं च ब्रह्मणस्पतिः ॥
उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमः सुप्रतीको विभावसुः ॥
पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिम्बाधमानाः । रायस्पोषे यज्ञपतिमाभजन्तीः ॥
रायस्पोषे अधि यज्ञो अस्थात्समिद्धे अग्नावधि मामहानः । उक्थपत्र ईड्यो गृभीतस्तप्तं घर्मम्परिगृह्यायजन्त ॥

ऊर्जा यद्यज्ञमशमन्त देवा दैव्याय धर्त्रे जोष्ट्रे । देवश्रीः श्रीमणाः
शतपयाः परिगृह्य देवा यज्ञमायन् ॥
सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ अजस्रम् । तस्य पूषा
प्रसवे याति देवः सम्पश्यन्विश्वा भुवनानि गोपाः ॥
देवा देवेभ्यो अध्वर्यन्तो अस्थुर्वीतँ शमित्रे शमिता यजध्यै । तुरीयो
यज्ञो यत्र हव्यमेति ततः पावका आशिषो नो जुषन्ताम् ॥
विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम् । स
विश्वाचीरभि चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम् ॥
उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिम्पितुरा विवेश । मध्ये दिवो
निहितः पृश्निरश्मा वि चक्रमे रजसः पात्यन्तौ ॥
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः । रथीतमँ रथीनां वाजानाँ
सत्पतिम्पतिम् ॥
सुम्नहूर्यज्ञो देवाँ आ च वक्षद्यक्षदग्निर्देवो देवाँ आ च वक्षत् ।
वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाँ इन्द्रो मे
निग्राभेणाधराँ अकः ॥
उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे
विषूचीनान्व्यस्यताम् ॥३॥

आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतँ सेना अजयत्साकमिन्द्रः ॥
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण
जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥
स इषुहस्तैः स निषङ्गिभिर्वशी सँस्रष्टा स युध इन्द्रो गणेन ।

सँसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥
बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः । प्रभञ्जन्त्सेनाः
प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमँ सजाता
अनु वीरयध्वमिन्द्रँ सखायोऽनु सँ रभध्वम् ॥
बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभिवीरो
अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥
अभि गोत्राणि सहसा गाहमानोऽदायो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः
पृतनाषाडयुध्योऽस्माकँ सेना अवतु प्र युत्सु ॥
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनाम्मरुतो यन्त्वग्रे ॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानाम्मरुताँ शर्ध उग्रम् ।
महामनसाम्भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु । अस्माकं
वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु ॥
उद्धर्षय मघवन्नायुधान्युत्सत्वनाम्मामकानाम्महाँसि । उद्वृत्रहन्वाजिनां
वाजिनान्युद्रथानां जयतामेतु घोषः ॥
उप प्रेत जयता नरः स्थिरा वः सन्तु बाहवः । इन्द्रो वः शर्म
यच्छत्वनाधृष्या यथासथ ॥
अवसृष्टा परा पत शरव्ये ब्रह्मसँशिता । गच्छामित्रान्प्र विश मैषां कं
चनोच्छिषः ॥
मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजामृतेनाभिऽवस्ताम् ।
उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनु मदन्तु देवाः ॥

यत्र॑ बा॒णाः स॒म्पत॑न्ति कुमा॒रा वि॑शि॒खा इ॑व । इन्द्रो॑ न॒स्तत्र॑ वृत्र॒हा
वि॑श्वा॒हा शर्म॑ यच्छतु ॥४॥

प्राची॒मनु॑ प्र॒दिश॒म्प्रेहि॑ वि॒द्वान॒ग्नेर॑ग्ने पु॒रोअ॑ग्निर्भ॑वे॒ह । विश्वा॒ आशा॒ दीद्या॑नो॒
वि भा॒ह्यूर्जं॑ नो धेहि द्वि॒पदे॒ चतु॑ष्पदे ॥
क्रम॑ध्वम॒ग्निना॒ नाक॒मुख्य॑ꣳहस्ते॑षु॒ बिभ्र॑तः । दि॒वः पृ॒ष्ठꣳ सुव॑र्ग॒त्वा
मि॒श्रा दे॒वेभि॑राध्वम् ॥
पृ॒थि॒व्या अ॒हमुद॒न्तरि॑क्ष॒मारु॑हम॒न्तरि॑क्षा॒द्दिव॒मारु॑हम् । दि॒वो नाक॑स्य
पृ॒ष्ठात्सु॑व॒र्ज्योति॑रगाम॒हम् ॥
सु॒व॒र्यन्तो॒ नापे॑क्षन्त॒ आ द्याꣳ रो॑हन्ति॒ रोद॑सी । य॒ज्ञं ये वि॒श्वतो॑धार॒ꣳ
सुवि॑द्वाꣳसो वितेनि॒रे ॥
अग्ने॒ प्रेहि॑ प्र॒थमो दे॑वय॒तां चक्षु॑र्दे॒वाना॑मु॒त मर्त्या॑नाम् । इय॑क्षमाणा॒
भृगु॑भिः स॒जोषा॒ः सुव॑र्यन्तु॒ यज॑मानाः स्व॒स्ति ॥
नक्तो॒षासा॒ सम॑नसा॒ विरू॑पे धा॒पये॑ते॒ शिशु॒मेक॑ꣳ समी॒ची । द्यावा॒ क्षामा॑
रु॒क्मो अ॒न्तर्वि भा॑ति दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाः ॥
अग्ने॑ सहस्राक्ष शतमूर्धञ्छ॒तं ते॑ प्रा॒णाः स॒हस्र॑मपा॒नाः । त्वꣳ सा॑ह॒स्रस्य॑
रा॒य ईशिषे॒ तस्मै॑ ते विधेम॒ वाजा॑य॒ स्वाहा॑ ॥
सु॒प॒र्णो॑ऽसि ग॒रुत्मा॑न्पृथि॒व्याꣳ सी॑द पृ॒ष्ठे पृ॑थि॒व्याः सी॑द भा॒सान्तरि॑क्ष॒मा
पृ॑ण॒ ज्योति॑षा॒ दिव॒मुत्त॑भान॒ तेज॑सा॒ दिश॒ उद्दृꣳह ॥
आ॒जुह्वा॑नः सु॒प्रती॑कः पु॒रस्ता॒दग्ने॒ स्वां योनि॒मा सी॑द सा॒ध्या ।
अ॒स्मिन्त्स॒धस्थे॒ अध्युत्त॑रस्मि॒न्विश्वे॑ देवा॒ यज॑मानश्च सीदत ॥
प्रेद्धो॑ अग्ने दीदिहि पु॒रो नोऽज॑स्रया सू॒र्म्या॑ यविष्ठ । त्वाꣳ शश्व॑न्त॒ उप॑
यन्ति॒ वाजा॑ः ॥

विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे । यस्माद्योनेरुदारिथा
यजे तम्प्र त्वे हवीꣳषि जुहुरे समिद्धे ॥
ताꣳ सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् । यामस्य
कण्वो अदुहत्प्रपीनाꣳ सहस्रधारां पयसा महीं गाम् ॥
सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि । सप्त
होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन ॥
ईदृङ्चान्यादृङ चैतादृङ च प्रतिदृङ च मितश्च सम्मितश्च सभराः ।
शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च
सत्यश्चर्तपाश्चात्यꣳहाः ॥ ऋतजिच्च सत्यजिच्च सेनजिच्च
सुषेणश्चान्त्यमित्रश्च दूरेअमित्रश्च गणः ।
ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः ।
ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन ।
मितासश्च सम्मितासश्च न ऊतये सभरसो मरुतो यज्ञे अस्मिन्निन्द्रं
दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मान एवमिमं
यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥५॥

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे । अनाविद्धया
तनुवा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु ॥
धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः
शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥
वक्ष्यन्तीवेदा गनीगन्ति कर्णम्प्रियꣳ सखायम्परिषस्वजाना । योषेव
शिङ्क्ते वितताधि धन्वन्ज्या इयꣳ समने पारयन्ती ॥
ते आचरन्ती समनेव योषा मातेव पुत्रम्बिभृतामुपस्थे । अप

शत्रूंन्विध्यताꣳ संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥
बह्वीनाम्पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥
रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनाम्महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥
तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूꣳरनपव्ययन्तः ॥
रथवाहनꣳ हविरस्य नाम यत्रायुधं निहितमस्य वर्म । तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः ॥
स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥
ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा । पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशꣳस ईशत ॥
सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता । यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यꣳसन् ॥
ऋजीते परि वृङ्ग्धि नोऽश्मा भवतु नस्तनूः । सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥
आ जङ्घन्ति सान्वेषां जघनाꣳ उप जिघ्नते । अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥
अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिम्परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳसम्परि पातु विश्वतः ॥
वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः सन्नद्धो असि वीडयस्वास्थाता ते जयतु जेत्वानि ॥

दिवः पृथिव्याः पर्योरिज उद्धृतं वनस्पतिभ्यः पर्याभृतꣳ सहः ।
अपामोज्मानम्परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथं यज ॥
इन्द्रस्य वज्रो मरुतामनीकम्मित्रस्य गर्भो वरुणस्य नाभिः । सेमां नो
हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥
उप श्वासय पृथिवीमुत द्याम्पुरुत्रा ते मनुतां विष्ठितं जगत् । स दुन्दुभे
सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥
आ क्रन्दय बलमोजो न आ धा निष्टनिहि दुरिता बाधमानः । अप प्रोथ
दुन्दुभे दुच्छुनाꣳ इत इन्द्रस्य मुष्टिरसि वीडयस्व ॥
आमूरज प्रत्यावर्तयेऽमाः केतुमद्दुन्दुभिर्वावदीति । समश्वपर्णाश्चरन्ति नो
नरो ऽस्माकमिन्द्र रथिनो जयन्तु ॥६॥

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा
हरिणस्य बाहू उपस्तुत्यम्महि जातं ते अर्वन् ॥
यमेन दत्तं त्रित एनमायुनगिन्द्र एणम्प्रथमो अध्यतिष्ठत् । गन्धर्वो अस्य
रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट ॥
असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन । असि सोमेन
समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि ॥
त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे । उतेव मे
वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम् ॥
इमा ते वाजिन्नवमार्जनानीमा शफानाꣳ सनितुर्निधाना । अत्रा ते भद्रा
रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥
आत्मानं ते मनसारादजानामवो दिवा पतयन्तम्पतङ्गम् । शिरो
अपश्यम्पथिभिः सुगेभिररेणुभिर्जेहमानम्पतत्रि ॥

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः । यदा ते मर्तो
अनु भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः ॥
अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनाम् । अनु
व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥
हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् । देवा इदस्य
हविरद्यमायन्यो अर्वन्तम्प्रथमो अध्यतिष्ठत् ॥
ईर्मान्तासः सिलिकमध्यमासः सँ शूरणासो दिव्यासो अत्याः । हँसा
इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥
तव शरीरम्पतयिष्णवर्वन्तव चित्तं वात इव ध्रजीमान् । तव शृङ्गाणि
विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति ॥
उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः । अजः पुरो नीयते
नाभिरस्यानु पश्चात्कवयो यन्ति रेभाः ॥
उप प्रागात्परमं यत्सधस्थमर्वाँ अच्छा पितरम्मातरं च । अद्या
देवाञ्जुष्टतमो हि गम्या अथाशास्ते दाशुषे वार्याणि ॥७॥

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् । यद्वाजिनो
देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥
यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीताम्मुखतो नयन्ति । सुप्राङजो
मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः ॥
एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।
अभिप्रियं यत्पुरोडाशमर्वता त्वष्टेदेनँ सौश्रवसाय जिन्वति ॥
यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति । अत्रा पूष्णः प्रथमो
भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥

होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः । तेन यज्ञेन
स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम् ॥
यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति । ये चार्वते
पचनꣳ सम्भरन्त्युतो तेषामभिगूर्तिर्न इन्वतु ॥
उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः । अन्वेनं विप्रा
ऋषयो मदन्ति देवानाम्पुष्टे चकृमा सुबन्धुम् ॥
यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य । यद्वा घास्य
प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ॥
यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति । यद्धस्तयोः
शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥
यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति । सुकृता
तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकम्पचन्तु ॥
यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति । मा
तद्भूम्यामा श्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥८॥

ये वाजिनम्परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति । ये चार्वतो
माꣳसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥
यन्नीक्षणम्माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।
ऊष्मण्यापिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥
निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः । यच्च पपौ यच्च घासिं
जघास सर्वा ता ते अपि देवेष्वस्तु ॥
मा त्वाग्निर्ध्वनयिद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः । इष्टं
वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् ॥

यदश्वा॑य॒ वास॑ उपस्तृ॒णन्त्य॑धीवा॒सं या हिर॑ण्यान्यस्मै ।
स॒न्दान॒मर्व॑न्त॒म्पड्बी॑शम्प्रि॒या दे॒वेष्वा या॑मयन्ति ॥
यत्ते॑ सा॒दे मह॑सा॒ शूकृ॑तस्य॒ पार्ष्णि॑या वा॒ कश॑या वा तु॒तोद॑ । स्रु॒चेव॒ ता
ह॒विषो॑ अध्व॒रेषु॒ सर्वा॒ ता ते॒ ब्रह्म॑णा सूदयामि ॥
चतु॑स्त्रि॒ꣳशद्वा॒जिनो॑ दे॒वब॑न्धो॒र्वङ्क्री॒रश्व॑स्य॒ स्वधि॑ति॒ः समे॑ति । अच्छि॑द्रा॒
गात्रा॑ व॒युना॑ कृणोत॒ परु॑ष्परुरनु॒घुष्या॒ वि श॑स्त ॥
एक॒स्त्वष्टु॒रश्व॑स्या विश॒स्ता द्वा य॒न्तारा॑ भवत॒स्तथ॒र्तुः । या ते॒
गात्रा॑णामृतु॒था कृ॒णोमि॒ ताता॒ पिण्डा॑ना॒म्प्र जु॑होम्य॒ग्नौ ॥
मा त्वा॑ तपत्प्रि॒य आ॒त्मापि॒यन्त॒म्मा स्वधि॑तिस्त॒नुव॒ आ ति॑ष्ठिपत्ते । मा ते॑
गृ॒ध्नुर॑विश॒स्ताति॒हाय॑ च्छि॒द्रा गात्रा॑ण्य॒सिना॒ मिथू॑ कः ॥
न वा उ॑वे॒तन्म्रि॑यसे॒ न रि॑ष्यसि दे॒वाꣳ इदे॑षि प॒थिभि॑ः सु॒गेभि॑ः । हरी॑ ते॒
यु॒ञ्जा पृष॑ती अभूता॒मुपा॑स्थाद्वा॒जी धु॒रि रास॑भस्य ॥
सु॒गव्यं॑ नो वा॒जी स्वश्वि॑यम्पु॒ꣳसः पु॒त्राꣳ उ॒त वि॑श्वा॒पुष॑ꣳ र॒यिम् ।
अ॒ना॒गा॒स्त्वं नो॒ अदि॑तिः कृणोतु क्ष॒त्रं नो॒ अश्वो॑ वनताꣳ ह॒विष्मा॑न् ॥६॥

इति चतुर्थकाण्डे षष्ठः प्रपाठकः ६

## अथ चतुर्थकाण्डे सप्तमः प्रपाठकः ७

अग्ना॑विष्णू स॒जोष॑से॒मा व॑र्धन्तु वा॒ं गिर॑ः । द्यु॒म्नैर्वाजे॑भि॒रा ग॑तम् ॥
वाज॑श्च मे प्रस॒वश्च॑ मे॒ प्रय॑तिश्च मे॒ प्रसि॑तिश्च मे धी॒तिश्च॑ मे॒ क्रतु॑श्च मे॒ स्वर॑श्च
मे॒ श्लोक॑श्च मे श्रा॒वश्च॑ मे॒ श्रुति॑श्च मे॒ ज्योति॑श्च मे॒ सुव॑श्च मे प्रा॒णश्च॑ मेऽपा॒नश्च॑
मे व्या॒नश्च॒ मेऽसु॑श्च मे चि॒त्तं च॑ म॒ आधी॑तं च मे॒ वाक्च॑ मे॒ मन॑श्च मे॒ चक्षु॑श्च
मे॒ श्रोत्रं॑ च मे॒ दक्ष॑श्च मे॒ बलं॑ च म॒ ओज॑श्च मे॒ सह॑श्च म॒ आयु॑श्च मे ज॒रा च॑
म आ॒त्मा च॑ मे त॒नूश्च॑ मे॒ शर्म॑ च मे॒ वर्म॑ च॒ मेऽङ्गा॑नि च मे॒ऽस्थानि॑ च मे॒

परूꣳषि च मे शरीराणि च मे ॥१॥

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ॥२॥

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे संविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ॥३॥

ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ॥४॥

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ॥५॥

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥६॥

अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥७॥

इ॒ध्मश्च॑ मे ब॒र्हिश्च॑ मे॒ वेदि॑श्च मे॒ धिष्णि॑याश्च मे॒ स्रुच॑श्च मे चम॒साश्च॑ मे॒ ग्रावा॑णश्च मे॒ स्वर॑वश्च म उपर॒वाश्च॑ मेऽधि॒षव॑णे च मे द्रोणकल॒शश्च॑ मे वाय॒व्या॑नि च मे पूत॒भृच्च॑ म आधव॒नीय॑श्च म॒ आग्नी॑ध्रं च मे ह॒वि॒र्धानं॑ च मे गृ॒हाश्च॑ मे॒ सद॑श्च मे पु॒रो॒डाशा॑श्च मे पच॒ताश्च॑ मेऽवभृ॒थश्च॑ मे स्वगाका॒रश्च॑ मे ॥८॥

अ॒ग्निश्च॑ मे घ॒र्मश्च॑ मे॒ऽर्कश्च॑ मे॒ सूर्य॑श्च मे प्रा॒णश्च॑ मेऽश्वमे॒धश्च॑ मे पृ॒थि॒वी च॒ मेऽदि॑तिश्च मे॒ दिति॑श्च मे॒ द्यौश्च॑ मे॒ शक्व॑रीर॒ङ्गुल॑यो॒ दिश॑श्च मे य॒ज्ञेन॑ कल्पन्ता॒मृक्च॑ मे॒ साम॑ च मे॒ स्तोम॑श्च मे॒ यजु॑श्च मे दी॒क्षा च॑ मे॒ तप॑श्च म ऋ॒तुश्च॑ मे व्र॒तं च॑ मेऽहोरा॒त्रयो॑र्वृ॒ष्ट्या बृ॑हद्रथन्त॒रे च॑ मे य॒ज्ञेन॑ कल्पेताम् ॥९॥

गर्भा॑श्च मे व॒त्साश्च॑ मे॒ त्र्यवि॑श्च मे त्र्य॒वी च॑ मे दित्य॒वाट्च॑ मे दित्यौ॒ही च॑ मे॒ पञ्चा॑विश्च मे पञ्चा॒वी च॑ मे त्रिव॒त्सश्च॑ मे त्रिव॒त्सा च॑ मे तु॒र्य॒वाट्च॑ मे तु॒र्यौ॒ही च॑ मे पष्ठ॒वाच्च॑ मे पष्ठौ॒ही च॑ म उ॒क्षा च॑ मे व॒शा च॑ म ऋ॒ष॒भश्च॑ मे वे॒हच्च॑ मेऽन॒ड्वाञ्च॑ मे धे॒नुश्च॑ म॒ आयु॑र्य॒ज्ञेन॑ कल्पतां प्रा॒णो य॒ज्ञेन॑ कल्पतामपा॒नो य॒ज्ञेन॑ कल्पतां व्या॒नो य॒ज्ञेन॑ कल्पता॒ं चक्षु॑र्य॒ज्ञेन॑ कल्पता॒ँ श्रोत्रं॑ य॒ज्ञेन॑ कल्पता॒ं मनो॑ य॒ज्ञेन॑ कल्पता॒ं वाग्य॒ज्ञेन॑ कल्पतामा॒त्मा य॒ज्ञेन॑ कल्पतां य॒ज्ञो य॒ज्ञेन॑ कल्पताम् ॥१०॥

एका॑ च मे ति॒स्रश्च॑ मे॒ पञ्च॑ च मे स॒प्त च॑ मे॒ नव॑ च म॒ एका॑दश च मे॒ त्रयो॑दश च मे॒ पञ्च॑दश च मे स॒प्तद॑श च मे॒ नव॑दश च म॒ एक॑वि॒ँशतिश्च मे॒ त्रयो॑वि॒ँशतिश्च मे॒ पञ्च॑वि॒ँशतिश्च मे स॒प्तवि॒ँशतिश्च मे॒

नवविँशतिश्च म एकत्रिँशच्च मे त्रयस्त्रिँशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विँशतिश्च मे चतुर्विँशतिश्च मेऽष्टाविँश-तिश्च मे द्वात्रिँशच्च मे षट्त्रिँशच्च मे चत्वारिँशच्च मे चतुश्चत्वारिँशच्च मेऽष्टाचत्वारिँशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥११॥

वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वैर्देवैर्धनसाताविहावतु ॥
विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः । विश्वे नो देवा अवसागमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥
वाजस्य प्रसवं देवा रथैर्याता हिरण्ययैः । अग्निरिन्द्रो बृहस्पतिर्मरुतः सोमपीतये ॥
वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥
वाजः पुरस्तादुत मध्यतो नो वाजो देवाँ ऋतुभिः कल्पयाति । वाजस्य हि प्रसवो नन्नमीति विश्वा आशा वाजपतिर्भवेयम् ॥
पयः पृथिव्याम्पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाम् । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥
सम्मा सृजामि पयसा घृतेन सम्मा सृजाम्यप ओषधीभिः । सोऽहं वाजँ सनेयमग्ने ॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकँ समीची । द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन्द्रविणोदाः ॥

समुद्रोऽसि नभस्वानार्द्रदानुः शम्भूर्मयोभूरभि मा वाहि स्वाहा मारुतोऽसि
मरुतां गणः शम्भूर्मयोभूरभि मा वाहि स्वाहावस्युरसि
दुवस्वाञ्छम्भूर्मयोभूरभि मा वाहि स्वाहा ॥१२॥

अग्निं युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णं वयसा बृहन्तम् । तेन
वयम्पतेम ब्रध्नस्य विष्टपꣳ सुवो रुहाणा अधि नाक उत्तमे ॥
इमौ ते पक्षावजरौ पतत्रिणो याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने । ताभ्याम्पतेम
सुकृतामु लोकं यत्रर्षयः प्रथमजा ये पुराणाः ॥
चिदसि समुद्रयोनिरिन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षः शकुनो
भुरण्युर्महान्त्सधस्थे ध्रुवः आ निषत्तः ॥
नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः । समुद्रे ते
हृदयमन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते ॥
उद्नो दत्तोदधिम्भिन्त दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो नो वृष्ट्यावत
। दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुः शर्म
सप्रथा नमस्पथे ॥
येनर्षयस्तपसा सत्रमासतेन्धाना अग्निꣳ सुवराभरन्तः । तस्मिन्नहं नि
दधे नाके अग्निमेतं यमाहुर्मनवः स्तीर्णबर्हिषम् ॥
तम्पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः । नाकं गृह्णानाः
सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥
आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः । पृष्ठे पृथिव्या
निहितो दविद्युतदधस्पदं कृणुते ये पृतन्यवः ॥
अयमग्निर्वीरतमो वयोधाः सहस्रियो दीप्यतामप्रयुच्छन् । विभ्राजमानः
सरिरस्य मध्य उप प्र यात दिव्यानि धाम ॥

सम्प्र च्य॑वध्व॒मनु॒ सम्प्र या॒ताग्ने॑ प॒थो दे॑व॒याना॑न्कृणुध्वम् ।
अ॒स्मिन्त्स॒धस्थे॒ अध्युत्त॑रस्मि॒न्विश्वे॑ देवा॒ यज॑मानश्च सीदत ॥
येना॑ स॒हस्र॒ं वह॑सि॒ येना॑ग्ने सर्ववे॒दसम् । तेने॒मं य॒ज्ञं नो॑ वह देव॒यानो॒ य उ॑त्त॒मः ॥
उद्बु॑ध्यस्वाग्ने॒ प्रति॑ जागृह्येनमिष्टापू॒र्ते सꣳ सृ॑जेथाम॒यं च॑ । पुन॑ः कृ॒ण्वꣳस्त्वा॑ पि॒तर॒ं युवा॑नम॒न्वाता॑ꣳसी॒त्त्वयि॒ तन्तु॑मे॒तम् ॥
अ॒यं ते॒ योनि॑रृ॒त्वियो॒ यतो॑ जा॒तो अरो॑चथाः । तं जा॒नन्न॑ग्न॒ आ रो॒हाथा॑ नो वर्धया र॒यिम् ॥१३॥

ममा॑ग्ने॒ वर्चो॑ विह॒वेष्व॑स्तु व॒यं त्वेन्धा॑नास्त॒नुव॑म्पुषेम । मह्यं॑ नमन्ताम्प्र॒दिश॒श्चत॑स्र॒स्त्वयाध्य॑क्षेण॒ पृत॑ना जयेम ॥
मम॑ दे॒वा वि॑ह॒वे स॑न्तु॒ सर्व॒ इन्द्रा॑वन्तो म॒रुतो॒ विष्णु॑र॒ग्निः ।
ममा॒न्तरि॑क्षमु॒रु गो॒पम॑स्तु॒ मह्यं॒ वात॑ः पवता॒ं कामे॑ अ॒स्मिन् ॥
मयि॑ दे॒वा द्रवि॑ण॒मा य॑जन्ता॒म्मय्या॒शीर॑स्तु॒ मयि॑ दे॒वहू॑तिः । दैव्या॒ होता॑रा वनिषन्त॒ पूर्वेरि॑ष्टाः स्याम त॒नुवा॑ सु॒वीरा॑ः ॥
मह्यं॑ यजन्तु॒ मम॒ यानि॑ ह॒व्याकू॑तिः स॒त्या मन॑सो मे अस्तु । एनो॒ मा नि गा॑ं कत॒मच्च॒नाहं विश्वे॑ देवासो॒ अधि॑ वोचता मे ॥
देवी॑ः षडुर्वीरु॒रु ण॑ः कृणोत॒ विश्वे॑ देवास इ॒ह वी॑रयध्वम् । मा हा॑स्महि प्र॒जया॒ मा त॒नूभि॒र्मा र॑धाम द्विष॒ते सो॑म राजन् ॥
अ॒ग्निर्म॒न्युम्प्र॑तिनु॒दन्पु॒रस्ता॒दद॑ब्धो गो॒पाः परि॑ पाहि न॒स्त्वम् । प्र॒त्यञ्चो॑ यन्तु नि॒गुत॒ः पुन॒स्तेऽमैषां॑ चि॒त्तम्प्र॒बुधा॒ वि ने॑शत् ॥
धा॒ता धा॑तॄ॒णाम्भुव॑नस्य॒ यस्पति॑र्दे॒वꣳ स॑वि॒तार॑मभिमाति॒षाह॑म् । इ॒मं य॒ज्ञम॒श्विनो॒भा बृह॒स्पति॑र्दे॒वाः पा॑न्तु॒ यज॑मानं न्य॒र्थात् ॥

उरुव्यचा नो महिषः शर्म यँसदस्मिन्हवे पुरुहूतः पुरुक्षु । स नः
प्रजायै हर्यश्व मृडयेन्द्र मा नो रीरिषो मा परा दाः ॥
ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । वसवो रुद्रा
आदित्या उपरिस्पृशम्मोग्रं चेत्तारमधिराजमक्रन् ॥
अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः । इमं नो यज्ञं
विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा ॥१४॥

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यम्पाञ्चजन्यम्बहवः समिन्धते । विश्वस्यां
विशि प्रविविशिवाँ समीमहे स नो मुञ्चत्वँहसः ॥
यस्येदम्प्राणन्निमिषद्यदेजति यस्य जातं जनमानं च केवलम् । स्तौम्यग्निं
नाथितो जोहवीमि स नो मुञ्चत्वँहसः ॥
इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमा उप मामुपागुः । यो
दाशुषः सुकृतो हवमुप गन्ता स नो मुञ्चत्वँहसः ॥
यः संग्रामं नयति सं वशी युधे यः पुष्टानि सँसृजति त्रयाणि ।
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वँहसः ॥
मन्वे वाम्मित्रावरुणा तस्य वित्तँ सत्यौजसा दृँहणा यं नुदेथे । या
राजानँ सरथं याथ उग्रा ता नो मुञ्चतमागसः ॥
यो वाँ रथ ऋजुरश्मिः सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन् । स्तौमि
मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥
वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः । यौ
विश्वस्य परिभू बभूवतुस्तौ नो मुञ्चतमागसः ॥
उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन् । स्तौमि वायुँ सवितारं
नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥

र॒थीत॑मौ रथी॒नाम॑ह्व ऊ॒तये॑ शु॒भं गमि॑ष्ठौ सु॒यमे॑भि॒रश्वैः॑ । ययो॑र्वां देवौ
दे॒वेष्वनिशित॒मोज॒स्तौ नो॑ मुञ्चत॒माग॑सः ॥
यदया॑तं वह॒तु॑ँ सू॒र्याया॑स्त्रिच॒क्रेण॑ स॒ँसद॑मि॒च्छमा॑नौ । स्तौमि॑
दे॒वाव॒शिनौ॑ नाथि॒तो जो॑हवीमि॒ तौ नो॑ मुञ्चत॒माग॑सः ॥
म॒रुता॑म्मन्वे॒ अधि॑ नो ब्रुवन्तु॒ प्रेमां वाचं॒ विश्वा॑मवन्तु॒ विश्वे॑ । आ॒शून्हु॑वे
सु॒यमा॑नू॒तये॑ ते नो॑ मुञ्चन्त्वेन॑सः ॥
ति॒ग्ममायु॑धं वीडि॒त॑ँ सह॑स्वद्दि॒व्य॑ँ शर्धः॑ पृत॑नासु जि॒ष्णु । स्तौमि॑
दे॒वान्म॒रुतो॑ नाथि॒तो जो॑हवीमि॒ ते नो॑ मुञ्चन्त्वेन॑सः ॥
दे॒वाना॑म्मन्वे॒ अधि॑ नो ब्रुवन्तु॒ प्रेमां वाचं॒ विश्वा॑मवन्तु॒ विश्वे॑ । आ॒शून्हु॑वे
सु॒यमा॑नू॒तये॑ ते नो॑ मुञ्चन्त्वेन॑सः ॥
यदि॒दम्मा॑भि॒शोच॑ति॒ पौरु॑षेयेण॒ दैव्ये॑न । स्तौमि॒ विश्वा॑न्दे॒वान्ना॑थि॒तो
जो॑हवीमि॒ ते नो॑ मुञ्चन्त्वेन॑सः ॥
अनु॑ नो॒ऽद्यानु॑मति॒ रन्विद॑नुमते॒ त्वं वै॑श्वान॒रो न॑ ऊ॒त्या पृ॒ष्टो दिवि
ये अप्र॑थेता॒मम॑तेभि॒रोजो॑भि॒र्ये प्र॑ति॒ष्ठे अभ॑वतां॒ वसू॑नाम् । स्तौमि॒
द्यावा॑पृथि॒वी ना॑थि॒तो जो॑हवीमि॒ ते नो॑ मुञ्चत॒म॑ँह॑सः ॥
उर्वी॑ रोदसी॒ वरि॑वः कृणो॒तं क्षेत्र॑स्य पत्नी॒ अधि॑ नो ब्रूयातम् । स्तौमि॒
द्यावा॑पृथि॒वी ना॑थि॒तो जो॑हवीमि॒ ते नो॑ मुञ्चत॒म॑ँह॑सः ॥
यत्ते॑ व॒यम्पु॑रुष॒त्रा य॑वि॒ष्ठावि॑द्वा॑ँसश्चकृ॒मा कच्च॒नाग॑ः । कृ॒धी स्व॑स्मा॑ँ
अदि॑ते॒रना॑गा॒ व्येना॑ँसि शिश्रथो॒ विष्व॑गग्ने ॥
यथा॑ ह॒ तद्व॑सवो गौ॒र्यं॑ चित्प॒दि षि॒ताममु॑ञ्चता यजत्राः । ए॒वा त्वम॒स्मत्प्र
मु॑ञ्चा॒ व्य॑ँह॒ः प्राता॑र्यग्ने प्र॒तरां न॒ आयु॑ः ॥१५॥

इति चतुर्थकाण्डे सप्तमः प्रपाठकः ७

इति चतुर्थं काण्डं सम्पूर्णम् ४

# अथ पञ्चमं काण्डम्

## अथ प्रथमः प्रपाठकः १

सावित्राणि जुहोति प्रसूत्यै चतुर्गृहीतेन जुहोति चतुष्पादः पशवः पशूनेवाव रुन्धे चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति च्छन्दाꣳसि देवेभ्योऽपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतमधारयन्पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतं जुहोति च्छन्दाꣳस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति यं कामयेत पापीयान्त्स्यादित्येकैकं तस्य जुहुयादाहुतीभिरेवैनमप गृह्णाति पापीयान्भवति यं कामयेत वसीयान्त्स्यादिति सर्वाणि तस्यानुद्रुत्य जुहुयादाहुत्यैवैनमभि क्रमयति वसीयान्भवत्यथो यज्ञस्यैवैषाभिक्रान्ति रेति वा एष यज्ञमुखादृद्ध्या योऽग्नेर्देवताया एत्यष्टावेतानि सावित्राणि भवन्त्यष्टाक्षरा गायत्री गायत्रोऽग्निस्तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैत्य ष्टौ सावित्राणि भवन्त्याहुतिर्नवमी त्रिवृतमेव यज्ञमुखे वि यातयति यदि कामयेत च्छन्दाꣳसि यज्ञयशसेनार्पयेयमित्यृचमन्तमां कुर्याच्छन्दाꣳस्येव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमिति यजुरन्तमं कुर्याद्यजमानमेव यज्ञयशसेनार्पयत्यृ चा स्तोमꣳ समर्धयेत्याह समृद्ध्यै चतुर्भिरभ्रिमा दत्ते चत्वारि च्छन्दाꣳसि च्छन्दोभिरेव देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्या अग्निर्देवेभ्यो निलायत स वेणुम्प्राविशत्स एतामूतिमनु समचरद्यद्वेणोः सुषिरꣳसुषिराभ्रिर्भवति सयोनित्वाय स यत्रयत्रावसत्तत्कृष्णमभवत्कल्माषी भवति रूपसमृद्ध्या उभयतः क्ष्णूर्भवतीतश्चामुतश्चार्कस्यावरुद्ध्यै व्याममात्री भवत्येतावद्वै पुरुषे वीर्यं वीर्यसम्मितापरिमिता भवत्यपरिमितस्यावरुद्ध्यै यो

वनस्पतीनाम्फलग्रहिः स एषां वीर्यावान्फलग्रहिर्वैणुर्वैणवी भवति वीर्यस्यावरुद्ध्यै ॥१॥

व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियते
इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमा दत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै
प्रतूर्तं वाजिन्ना द्रवेत्यश्वमभि दधाति रूपमेवास्यैतन्महिमानं व्याचष्टे
युञ्जाथाꣳ रासभं युवमिति गर्दभमसत्येव गर्दभम्प्रति ष्ठापयति
तस्मादश्वाद्गर्दभोऽसत्तरो योगेयोगे तवस्तरमित्याह योगेयोग एवैनं युङ्क्ते
वाजेवाजे हवामह इत्याहान्नं वै वाजोऽन्नमेवाव रुन्द्धे सखाय इन्द्रमूतय
इत्याहेन्द्रियमेवाव रुन्द्धेऽग्निर्देवेभ्यो निलायत
तम्प्रजापतिरन्वविन्दत्प्राजापत्योऽश्वोऽश्वेन सम्भरत्यनुवित्त्यै पापवस्यसं वा
एतत्क्रियते यच्छ्रेयसा च पापीयसा च समानं कर्म कुर्वन्ति
पापीयान्ह्यश्वाद्गर्दभोऽश्वम्पूर्वं नयन्ति पापवस्यसस्य व्यावृत्त्यै
तस्माच्छ्रेयाꣳसं पापीयान्पश्चादन्वेति बहुर्वै भवतो भ्रातृव्यो भवतीव खलु
वा एष योऽग्निं चिनुते वज्र्यश्वः प्रतूर्वन्नेह्यवक्रामन्नशस्तीरित्याह वज्रेणैव
पाप्मानम्भ्रातृव्यमव क्रामति रुद्रस्य गाणपत्यादित्याह रौद्रा वै पशवो
रुद्रादेव पशून्निर्याच्यात्मने कर्म कुरुते पूष्णा सयुजा सहेत्याह पूषा वा
अध्वनाꣳ सन्नेता समष्ट्यै पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे
देवतानाꣳ समभरन्पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वदच्छेहीत्याह
सायतनमेवैनं देवताभिः सम्भरत्यग्निम्पुरीष्यमङ्गिरस्वदच्छेम इत्याह येन
सङ्गच्छते वाजमेवास्य वृङ्क्ते प्रजापतये प्रतिप्रोच्याग्निः सम्भृत्य इत्याहुरियं
वै प्रजापतिस्तस्या एतच्छ्रोत्रं यद्वल्मीकोऽग्निम्पुरीष्यमङ्गिरस्वद्भरिष्याम
इति वल्मीकवपामुप तिष्ठते साक्षादेव प्रजापतये प्रतिप्रोच्याग्निꣳ

सम्भरत्वग्निम्पुरीष्यमङ्गिरस्वद्भराम् इत्याह येन सङ्गच्छते वाजमेवास्य
वृङ्क्तेऽन्वग्निरुषसामग्रमख्यदित्याहानुख्यात्या आगत्य वाज्यध्वन
आक्रम्य वाजिन्पृथिवीमित्याहेच्छत्यैवैनम्पूर्वया विन्दत्युत्तरया द्वाभ्यामा
क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्र जायन्ते द्यौस्ते
पृष्ठम्पृथिवी सधस्थमित्याहैभ्यो वा एतं लोकेभ्यः प्रजापतिः
समैरयद्रूपमेवास्यैतन्महिमानं व्याचष्टे वज्री वा एष यदश्वो
दद्भिरन्यतोदद्भ्यो भूयाँल्लोमभिरुभयादद्भ्यो यं द्विष्यात्तमधस्पदं
ध्यायेद्वज्रेणैवैनꣳ स्तृणुते ॥२॥

उत्क्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां
तस्मादनुरूपाः पशवः प्र जायन्तेऽप उप सृजति यत्र वा आप उपगच्छन्ति
तदोषधयः प्रति तिष्ठन्त्योषधीः प्रतितिष्ठन्तीः पशवोऽनु प्रति तिष्ठन्ति
पशून्यज्ञो यज्ञं यजमानो यजमानम्प्रजास्तस्मादप उप सृजति प्रतिष्ठित्यै
यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ
हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ
रक्षाꣳसि घ्नन्ति जिघर्म्यग्निम्मनसा घृतेनेत्याह मनसा हि पुरुषो
यज्ञमभिगच्छति प्रतिक्ष्यन्तम्भुवनानि विश्वेत्याह सर्वꣳ ह्येष प्रत्यङ्ङेति पृथुं
तिरश्चा वयसा बृहन्तमित्याहाल्पो ह्येष जातो महान्भवति व्यचिष्ठमन्नꣳ
रभसं विदानमित्याहान्नमेवास्मै स्वदयति सर्वमस्मै स्वदते य एवं
वेदा त्वा जिघर्मि वचसा घृतेनेत्याह तस्माद्यत्पुरुषो मनसाभिगच्छति
तद्वाचा वदत्यरक्षसेत्याह रक्षसामपहत्यै मर्त्यश्रीः स्पृहयद्वर्णो
अग्निरित्याहापचितिमेवास्मिन्दधात्यपचितिमान्भवति य एवं वेद
मनसा त्वै तामाप्तुमर्हति यामध्वर्युरनग्नावाहुतिं जुहोति मनस्वतीभ्यां

जुहोत्याहुत्योराप्त्यै द्वाभ्यां प्रतिष्ठित्यै यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येतर्हि खलु वा एतद्यज्ञमुखं यर्ह्येनदाहुतिरश्नुते परि लिखति रक्षसामपहत्यै तिसृभिः परि लिखति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्माद्रक्षाꣳस्यप हन्ति गायत्रिया परि लिखति तेजो वै गायत्री तेजसैवैनम्परि गृह्णाति त्रिष्टुभा परि लिखतीन्द्रियं वै त्रिष्टुगिन्द्रियेणैवैनम्परि गृह्णात्य नुष्टुभा परि लिखत्यनुष्टुप्सर्वाणि च्छन्दाꣳसि परिभूः पर्याप्त्यै मध्यतोऽनुष्टुभा वाग्वा अनुष्टुप्तस्मान्मध्यतो वाचा वदामो गायत्रिया प्रथमया परि लिखत्यथानुष्टुभाथ त्रिष्टुभा तेजो वै गायत्री यज्ञोऽनुष्टुगिन्द्रियं त्रिष्टुप्तेजसा चैवेन्द्रियेण चोभयतो यज्ञम्परि गृह्णाति ॥३॥

देवस्य त्वा सवितुः प्रसव इति खनति प्रसूत्या अथो धूममेवैतेन जनयति ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमित्याह ज्योतिरेवैतेन जनयति सोऽग्निर्जातः प्रजाः शुचार्पयत्तं देवा अर्धर्चेनाशमयञ्छिवम्प्रजाभ्योऽहिꣳसन्तमित्याह प्रजाभ्य एवैनꣳ शमयति द्वाभ्यां खनति प्रतिष्ठित्या अपाम्पृष्ठमसीति पुष्करपर्णमा हरत्यपां वा एतत्पृष्ठं यत्पुष्करपर्णꣳ रूपेणैवैनदा हरति पुष्करपर्णेन सम्भरति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाग्निꣳ सम्भरति कृष्णाजिनेन सम्भरति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सम्भरति यद्ग्राम्याणाम्पशूनां चर्मणा सम्भरेद्ग्राम्यान्पशूञ्छुचार्पयेत्कृष्णाजिनेन सम्भरत्यारण्यानेव पशूञ्छुचार्पयति तस्मात्समावत्पशूनाम्प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृता लोमतः सम्भरत्यतो ह्यस्य मेध्यं कृष्णाजिनं च पुष्करपर्णं च सꣳ स्तृणातीयं वै कृष्णाजिनमसौ

पुष्करपर्णमाभ्यामेवैनमुभयतः परि गृह्णात्यग्निर्देवेभ्यो निलायत
तमथर्वान्वपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इत्याह य
एवैनमन्वपश्यत्तेनैवैनꣳ सम्भरति त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे
ह्येनमुपश्रितमविन्दत्तमु त्वा दध्यङ्ङृषिरित्याह दध्यङ्वा
आथर्वणस्तेजस्व्यासीत्तेज एवास्मिन्दधाति तमु त्वा पाथ्यो वृषेत्याह
पूर्वमेवोदितमुत्तरेणाभि गृणाति चतसृभिः सम्भरति चत्वारि च्छन्दाꣳसि
च्छन्दोभिरेव गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुग्भी राजन्यस्य
त्रैष्टुभो हि राजन्यो यं कामयेत वसीयान्त्स्यादित्युभयीभिस्तस्य
सम्भरेत्तेजश्चैवास्मा इन्द्रियं च समीची दधात्यष्टाभिः सम्भरत्यष्टाक्षरा
गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तꣳ सम्भरति सीद होतरित्याह देवता
एवास्मै सꣳ सादयति नि होतेति मनुष्यान्त्सꣳ सीदस्वेति वयाꣳसि
जनिष्वा हि जेन्यो अग्रे अह्नामित्याह देवमनुष्यानेवास्मै सꣳसन्नान्प्र
जनयति ॥४॥

क्रूरमिव वा अस्या एतत्करोति यत्खनत्यप उप सृजत्यापो वै शान्ताः
शान्ताभिरेवास्यै शुचꣳ शमयति सं ते वायुर्मातरिश्वा दधात्वित्याह प्राणो
वै वायुः प्राणेनैवास्यै प्राणꣳ सं दधाति सं ते वायुरित्याह
तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते तस्मै च देवि वषडस्तु तुभ्यमित्याह
षड्वा ऋतव ऋतुष्वेव वृष्टिं दधाति तस्मात्सर्वानृतून्वर्षति
यद्वषट्कुर्याद्यातयामास्य वषट्कारः स्याद्यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञꣳ
हन्युर्वडित्याह परोऽक्षमेव वषट्करोति नास्य यातयामा वषट्कारो
भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति सुजातो ज्योतिषा सहेत्यनुष्टुभोप
नह्यत्यनुष्टुप्सर्वाणि च्छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनं

तनुवा परि दधाति वेदुको वासौ भवति य एवं वेद वारुणो वा
अग्निरुपनद्ध उदु तिष्ठ स्वध्वरोर्ध्व ऊ षु ण ऊतय इति
सावित्रीभ्यामुत्तिष्ठति सवितृप्रसूत एवास्योर्ध्वां वरुणमेनिमुत्सृजति
द्वाभ्यां प्रतिष्ठित्यै स जातो गर्भो असि रोदस्योरित्याहेमे वै रोदसी तयोरेष
गर्भो यदग्निस्तस्मादेवमाहाग्ने चारुर्विभृत ओषधीष्वित्याह यदा ह्येतं
विभरन्त्यथ चारुतरो भवति प्र मातृभ्यो अधि कनिक्रदद्गा इत्याहौषधयो
वा अस्य मातरस्ताभ्य एवैनम्प्र च्यावयति स्थिरो भव वीड्वङ्ग इति
गर्दभ आ सादयति सं नह्यत्येवैनमेतया स्थेम्ने गर्दभेन सम्भरति
तस्माद्गर्दभः पशूनाम्भारभारितमो गर्दभेन सम्भरति
तस्माद्गर्दभोऽप्यनालेशेऽत्यन्यान्पशून्मेद्यत्यन्नँ ह्येनेनार्कँ सम्भरन्ति
गर्दभेन सम्भरति तस्माद्गर्दभो द्विरेताः सन्कनिष्ठम्पशूनाम्प्र जायतेऽग्निर्ह्यस्य
योनिं निर्दहति प्रजासु वा एष एतर्ह्यारूढः स ईश्वरः प्रजाः शुचा प्रदहः
शिवो भव प्रजाभ्य इत्याह प्रजाभ्य एवैनँ शमयति मानुषीभ्यस्त्वमङ्गिर
इत्याह मानव्यो हि प्रजा मा द्यावापृथिवी अभि शूशुचो मान्तरिक्षम्मा
वनस्पतीनित्याहैभ्य एवैनं लोकेभ्यः शमयति प्रैतु वाजी कनिक्रददित्याह
वाजी ह्येष नानदद्रासभः पत्वेत्याह रासभ इति
ह्येतमृषयोऽवदन्भरन्नग्निम्पुरीष्यमित्याहाग्निँ ह्येष भरति मा पाद्यायुषः
पुरेत्याहायुरेवास्मिन्दधाति तस्माद्गर्दभः सर्वमायुरेति तस्माद्गर्दभे पुरायुषः
प्रमीते बिभ्यति वृषाग्निं वृषणम्भरन्नित्याह वृषा ह्येष वृषाग्निरपां गर्भँ
समुद्रियमित्याहापाँ ह्येष गर्भो यदग्निरग्न आ याहि वीतय इति वा
इमौ लोकौ व्यैतामग्न आ याहि वीतय इति यदाहानयोर्लोकयोर्वीत्यै
प्रच्युतो वा एष आयतनादगतः प्रतिष्ठाँ स एतर्ह्यध्वर्युं च यजमानं च
ध्यायत्यृतँ सत्यमित्याहेयं वा ऋतमसौ सत्यमनयोरेवैनम्प्रति ष्ठापयति

नार्तिमार्च्छत्यध्वर्युर्न यजमानो वरुणो वा एष यजमानमभ्यैति यदग्निरुपनद्ध ओषधयः प्रति गृह्णीताग्निमेतमित्याह शान्त्यै व्यस्यन्विश्वा अमतीररातीरित्याह रक्षसामप हत्यै निषीदन्नो अप दुर्मतिँ हनदित्याह प्रतिष्ठित्या ओषधयः प्रति मोदध्वमेनमित्याहौषधयो वा अग्नेर्भागधेयं ताभिरेवैनँ समर्धयति पुष्पावतीः सुपिप्पला इत्याह तस्मादोषधयः फलं गृह्णन्त्ययं वो गर्भ ऋत्वियः प्रत्नँ सधस्थमासददित्याह याभ्य एवैनम्प्रच्यावयति तास्वेवैनम्प्रति ष्ठापयति द्वाभ्यामुपावहरति प्रतिष्ठित्यै ॥५॥

वारुणो वा अग्निरुपनद्धो वि पाजसेति वि स्रँसयति सवितृप्रसूत एवास्य विषूचीं वरुणमेनिं वि सृजत्यप उप सृजत्यापो वै शान्ताः शान्ताभिरेवास्य शुचँ शमयति तिसृभिरुप सृजति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचँ शमयति मित्रः सँसृज्य पृथिवीमित्याह मित्रो वै शिवो देवानां तेनैवैनँ सँ सृजति शान्त्यै यद्ग्राम्याणाम्पात्राणां कपालैः सँसृजेद्ग्राम्याणि पात्राणि शुचार्पयेदर्मकपालैः सँ सृजत्येतानि वा अनुपजीवनीयानि तान्येव शुचार्पयति शर्कराभिः सँ सृजति धृत्या अथो शन्त्वायाजलोमैः सँ सृजत्येषा वा अग्नेः प्रिया तनूर्यदजा प्रिययैवैनं तनुवा सँ सृजत्यथो तेजसा कृष्णाजिनस्य लोमभिः सँ सृजति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञँ सँ सृजति रुद्राः सम्भृत्य पृथिवीमित्याहैता वा एतं देवता अग्रे समभरन्ताभिरेवैनँ सम्भरति मखस्य शिरोऽसीत्याह यज्ञो वै मखस्तस्यैतच्छिरो यदुखा तस्मादेवमाह यज्ञस्य पदे स्थ इत्याह यज्ञस्य ह्येते पदे अथो प्रतिष्ठित्यै प्रान्याभिर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनत्वाय

त्र्युद्धिं करोति त्रयं इमे लोका एषां लोकानामाप्त्यै छन्दोभिः करोति वीर्यं वै छन्दाँसि वीर्येणैवैनां करोति यजुषा बिलं करोति व्यावृत्त्या इयंतीं करोति प्रजापतिना यज्ञमुखेन सम्मितां द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुःस्तनां करोति पशूनां दोहाया ष्टास्तनां करोति च्छन्दसां दोहाय नवाश्रिमभिचरतःकुर्यात्त्रिवृतमेव वज्रँ सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्यै कृत्वाय सा महीमुखामिति नि दधाति देवतास्वेवैनाम्प्रति ष्ठापयति ॥६॥

सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्राणाः शिर एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान्दधाति तस्मात्सप्त शीर्षन्प्राणा अश्वशकेन धूपयति प्राजापत्यो वा अश्वः सयोनित्वाया दितिस्त्वेत्याहेयं वा अदितिरदित्यैवादित्यां खनत्यस्या अक्रूरङ्काराय न हि स्वः स्वँ हिनस्ति देवानां त्वा पत्नीरित्याह देवानां वा एताम्पत्नयोऽग्रेऽकुर्वन्ताभिरेवैनां दधाति धिषणास्त्वेत्याह विद्या वै धिषणा विद्याभिरेवैनामभीन्द्धे ग्नास्त्वेत्याह च्छन्दाँसि वै ग्नाश्छन्दोभिरेवैनाँ श्रपयति वरूत्रयस्त्वेत्याह होत्रा वै वरूत्रयो होत्राभिरेवैनाम्पचति जनयस्त्वेत्याह देवानां वै पत्नी र्जनयस्ताभिरेवैनाम्पचति षड्भिः पचति षड्वा ऋतव ऋतुभिरेवैनाम्पचति द्विः पचन्त्वित्याह तस्माद्द्विः संवत्सरस्य सस्यम्पच्यते वारुण्युखाभीद्धा मैत्रियोपैति शान्त्यै देवस्त्वा सवितोद्वपत्वित्याह सवितृप्रसूत एवैनाम्ब्रह्मणा देवताभिरुद्वपत्य पद्यमाना पृथिव्याशा दिश आ पृणेत्याह तस्मादग्निः सर्वा दिशोऽनु वि भात्यु त्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्याह प्रतिष्ठित्या असुर्यम्पात्रमनाच्छृण्णमा च्छृणत्ति देवत्राक रजक्षीरेण

च्छृंणत्ति परमं वा एतत्पयो यदंजक्षीरं
पंरमेणैवैनाम्पयसाच्छृंणत्ति यजुंषा व्यावृंत्त्यै छन्दोंभिरा च्छृंणत्ति
च्छन्दोंभिर्वा एषा क्रियते छन्दोंभिरेव च्छन्दाँस्या च्छृंणत्ति ॥७॥

एकंविँशत्या माषैंः पुरुषशीर्षमच्छैंत्यमेध्या वै माषा
अमेध्यम्पुंरुषशीर्षमंमेध्यैरेवास्यांमेध्यं निंरवदाय मेध्यं
कृत्वाहंरत्ये कंविँशतिर्भवन्त्येकविँशो वै पुरुंषः पुरुंषस्याप्त्यै व्यृंद्धं
वा एतत्प्राणैरंमेध्यं यत्पुंरुषशीर्षँ सप्तधा वितृंगणां वल्मीकवपाम्प्रति नि
दंधाति सप्त वै शीर्षण्याः प्राणाः प्राणैरेवैनत्समंर्धयति मेध्यत्वाय यावंन्तो
वै मृत्युबंन्धवस्तेषां यम आधिंपत्यम्परीयाय यमगाथाभिः परिं गायति
यमादेवैनंद्वृङ्क्ते तिसृभिः परिं गायति त्रयं इमे लोका एभ्य एवैनंल्लोकेभ्यो
वृङ्क्ते तस्माद्गायंते न देयं गाथा हि तद्वृङ्क्तेऽग्निभ्यः पशूना लंभते कामा वा
अग्नयः कामांनेवावं रुन्द्धे
यत्पशून्नालभेतानंवरुद्धा अस्य पशवंः स्युर्यत्पर्यंग्निकृतानुत्सृजेद्यंज्ञवेशसं
कुर्याद्यत्सँस्थापयेंद्यातयांमानि शीर्षाणि स्युर्यत्पशूनालभंते तेनैव
पशूनवं रुन्द्धे यत्पर्यंग्निकृतानुत्सृजतिं शीर्ष्णामयांतयामत्वाय प्राजापत्येन
सँ स्थांपयति यज्ञो वै प्रजापंतिर्यज्ञ एव यज्ञम्प्रतिं ष्ठापयति प्रजापंतिः
प्रजा अंसृजत स रिंरिचानोंऽमन्यत
स एता आप्रीरंपश्यत्ताभिर्वै स मुंखत आत्मानमाप्रींणीत यदेता आप्रियो
भवंन्ति यज्ञो वै प्रजापंतिर्यज्ञमेवैताभिर्मुखत आ
प्रींणात्य पंरिमितच्छन्दसो भवन्त्यपंरिमितः प्रजापंतिः प्रजापंतेराप्त्या
ऊनातिरिक्ता मिंथुनाः प्रजांत्यै लोमशं वै नामैतच्छन्दंः प्रजापंतेः पशवो
लोमशाः पशूनेवावं रुन्द्धे सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ

चित्यै क्रियन्ते तस्मादेता अग्नेश्चित्यस्य भवन्त्ये कवि॑ँशति॑ँ सामिधेनीरन्वाह रुग्वा एकवि॑ँशो रुचमेव गच्छत्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकवि॑ँश श्चतुर्वि॑ँशतिमन्वाह चतुर्वि॑ँशतिरर्धमासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्द्धे पराचीरन्वाह पराङिव हि सुवर्गो लोकः समास्त्वाग्न ऋतवो वर्धयन्त्वित्याह समाभिरेवाग्निं वर्धयत्यृतुभिः संवत्सरं विश्वा आ भाहि प्रदिशः पृथिव्या इत्याह तस्मादग्निः सर्वा दिशोऽनु वि भाति प्रत्यौहतामश्विना मृत्युमस्मादित्याह मृत्युमेवास्मादप नुदत्यु द्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादप हन्त्य गन्म ज्योतिरुत्तममित्याहासौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति न संवत्सरस्तिष्ठति नास्य श्रीस्तिष्ठति यस्यैताः क्रियन्ते ज्योतिष्मतीमुत्तमामन्वाह ज्योतिरिवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्यानुख्यात्यै ॥८॥

षड्भिर्दीक्षयति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयति सप्तभिर्दीक्षयति सप्त च्छन्दा॑ँसि च्छन्दोभिरेवैनं दीक्षयति विश्वे देवस्य नेतुरित्यनुष्टुभोत्तमया जुहोति वाग्वा अनुष्टुप्तस्मात्प्राणानां वागुत्तमै कस्मादक्षरादनाप्तम्प्रथमम्पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजाना॑ँ सृष्ट्यै यदर्चिषि प्रवृञ्ज्याद्भूतमव रुन्धीत यदङ्गारेषु भविष्यदङ्गारेषु प्र वृणक्ति भविष्यदेवाव रुन्द्धे भविष्यद्धि भूयो भूताद्द्वाभ्याम्प्र वृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै ब्रह्मणा वा एषा यजुषा सम्भृता यदुखा सा यद्भिद्येतार्तिमार्च्छेद्यजमानो हन्येतास्य यज्ञो मित्रैतामुखां तपेत्याह ब्रह्म वै

मित्रो ब्रह्मन्नेवैनाम्प्रति ष्ठापयति नार्तिमार्च्छति यजमानो नास्य यज्ञो हन्यते यदि भिद्येत तैरेव कपालैः स ँसृजेत्सैव ततः प्रायश्चित्ति र्यो गतश्रीः स्यान्मथित्वा तस्याव दध्याद्भूतो वा एष स स्वां देवतामुपैति यो भूतिकामः स्याद्य उखायै सम्भवेत्स एव तस्य स्यादतो ह्येष सम्भवत्येष वै स्वयम्भूर्नाम भवत्येव यं कामयेत भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याहृत्याव दध्यात्साक्षादेवास्मै भ्रातृव्यं जनयत्य म्बरीषादन्नकामस्याव दध्यादम्बरीषे वा अन्नम्भ्रियते सयोन्येवान्नमव रुन्द्धे मुञ्जानव दधात्यूर्ग्वै मुञ्जा ऊर्जमेवास्मा अपि दधात्य ग्निर्देवेभ्यो निलायत स क्रुमुकम्प्राविशत्क्रुमुकमव दधाति यदेवास्य तत्र न्यक्तं तदेवाव रुन्द्ध आज्येन सं यौत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा वैकङ्कतीमा दधाति भा एवाव रुन्द्धे शमीमयीमा दधाति शान्त्यै सीद त्वम्मातुरस्या उपस्थ इति तिसृभिर्जातमुप तिष्ठते त्रय इमे लोका एष्वेव लोकेष्वाविदं गच्छत्यथो प्राणानेवात्मन्धत्ते ॥६॥

न ह स्म वै पुराग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एवर्षिरस्वदयद्यदग्ने यानि कानि चेति समिधमा दधात्यपरशुवृक्णमेवास्मै स्वदयति सर्वमस्मै स्वदते य एवं वेदौ दुम्बरीमा दधात्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधाति प्रजापतिरग्निमसृजत त ँ सृष्ट ँ रक्षा ँस्यजिघा ँसन्त्स एतद्राक्षोघ्नमपश्यत्तेन वै स रक्षा ँस्यपाहत यद्राक्षोघ्नम्भवत्यग्नेरेव तेन जाताद्रक्षा ँस्यप हन्त्या श्वत्थीमा दधात्यश्वत्थो वै वनस्पतीना ँ सपत्नसाहो विजित्यै वैकङ्कतीमा दधाति भा एवाव रुन्द्धे शमीमयीमा दधाति शान्त्यै स ँशितम्मे ब्रह्मोदेषाम्बाहू अतिरमित्युत्तमे औदुम्बरी

वाचयति ब्रह्मणैव क्षत्रꣳ सꣳ श्यति क्षत्रेण ब्रह्म तस्माद्ब्राह्मणो राजन्यवानत्यन्यम्ब्राह्मणं तस्माद्राजन्यो ब्राह्मणवानत्यन्यꣳ राजन्यं मृत्युर्वा एष यदग्निरमृतꣳ हिरण्यꣳ रुक्ममन्तरम्प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्धत्त एकविꣳशतिनिर्बाधो भवत्येकविꣳशतिर्वै देवलोका द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतावन्तो वै देवलोकास्तेभ्य एव भ्रातृव्यमन्तरेति निर्बाधैर्वै देवा असुरान्निर्बाधेऽकुर्वत तन्निर्बाधानां निर्बाधत्वं निर्बाधी भवति भ्रातृव्यानेव निर्बाधे कुरुते सावित्रिया प्रति मुञ्चते प्रसूत्यै नक्तोषासेत्युत्तरयाहोरात्राभ्यामेवैनमुद्यच्छते देवा अग्निं धारयन्द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा अहोरात्राभ्यामेवैनमुद्यत्य प्राणैर्दाधारा सीनः प्रति मुञ्चते तस्मादासीनाः प्रजाः प्र जायन्ते कृष्णाजिनमुत्तरं तेजो वै हिरण्यम्ब्रह्म कृष्णाजिनं तेजसा चैवैनम्ब्रह्मणा चोभयतः परि गृह्णाति षडुद्यामꣳ शिक्यं भवति षड्वा ऋतव ऋतुभिरेवैनमुद्यच्छते यद्द्वादशोद्यामꣳ संवत्सरेणैव मौञ्जम्भवत्यूर्ग्वै मुञ्जा ऊर्जैवैनꣳ समर्धयति सुपर्णोऽसि गरुत्मानित्यवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टे दिवं गच्छ सुवः पतेत्याह सुवर्गमेवैनं लोकं गमयति ॥१०॥

समिद्धो अञ्जन्कृदरम्मतीनां घृतमग्ने मधुमत्पिन्वमानः । वाजी वहन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥
घृतेनाञ्जन्त्सम्पथो देवयानान्प्रजानन्वाज्यप्येतु देवान् । अनु त्वा सप्ते प्रदिशः सचन्ताꣳ स्वधामस्मै यजमानाय धेहि ॥
ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते । अग्निष्ट्वा देवैर्वसुभिः

सजोषाः प्रीतं वह्निं वहतु जातवेदाः ॥
स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानम्पृथिव्याम् ।
देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥
एता उ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणा उदातैः । ऋष्वाः
सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु ॥
अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभि संविदाने । उषासा वाँ
सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि ॥
प्रथमा वाँ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा । अपिप्रयं
चोदना वाम्मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ॥
आदित्यैर्नो भारती वष्टु यज्ञँ सरस्वती सह रुद्रैर्न आवीत् । इडोपहूता
वसुभिः सजोषा यज्ञं नो देवीरमृतेषु धत्त ॥
त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः त्वष्टेदं विश्वम्भुवनं
जजान बहोः कर्तारमिह यक्षि होतः ॥
अश्वो घृतेन त्मन्या समक्त उप देवाँ ऋतुशः पाथ एतु ।
वनस्पतिर्देवलोकम्प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ॥
प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने । स्वाहाकृतेन
हविषा पुरोगा याहि साध्या हविरदन्तु देवाः ॥११॥

इति पञ्चमकाण्डे प्रथमः प्रपाठकः १

## अथ पञ्चमकाण्डे द्वितीयः प्रपाठकः २

विष्णुमुखा वै
देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन्यद्विष्णुक्रमान्क्रमते विष्णुरेव
भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभि जयति विष्णोः

क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती
द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान्यथापूर्वमभि जयति
प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः पराङैत्तमेतयान्वैदक्रन्ददिति तया वै
सोऽग्नेः प्रियं धामावारुन्द्ध
यदेतामन्वाहाग्नेरेवैतया प्रियं धामाव रुन्द्ध ईश्वरो वा एष पराङ्प्रदघो यो
विष्णुक्रमान्क्रमते चतसृभिरा वर्तते चत्वारि च्छन्दाꣳसि
च्छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रियामेवास्य तनुवमभि पर्यावर्तते
दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो
वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनु पर्यावर्तते शुनःशेपमाजीगर्तिं
वरुणोऽगृह्णात्स एताम्वारुणीमपश्यत्तया वै स आत्मानं
वरुणपाशादमुञ्चद्वरुणो वा एतं गृह्णाति य उखाम्प्रतिमुञ्चत  उदुत्तमं
वरुणपाशमस्मदित्याहात्मानमेवैतया वरुणपाशान्मुञ्चत्या
त्वाहार्षमित्याहाह्येनꣳ हरति ध्रुवस्तिष्ठाविचाचलिरित्याह प्रतिष्ठित्यै
विशस्त्वा सर्वा वाञ्छन्त्वित्याह विशैवैनꣳ समर्धयत्यस्मिन्राष्ट्रमधि
श्रयेत्याह राष्ट्रमेवास्मिन्ध्रुवमकर्यं कामयेत राष्ट्रꣳ स्यादिति तम्मनसा
ध्यायेद्राष्ट्रमेव भवत्यग्रे बृहन्नुषसामूर्ध्वो अस्थादित्याहाग्रमेवैनꣳ
समानानां करोति निर्जग्मिवान्तमस इत्याह तम एवास्मादप हन्ति
ज्योतिषागादित्याह ज्योतिरेवास्मिन्दधाति चतसृभिः सादयति चत्वारि
च्छन्दाꣳसि च्छन्दोभिरेवातिच्छन्दसोत्तमया वर्ष्म वा एष च्छन्दसां
यदतिच्छन्दा वर्ष्मैवैनꣳ समानानां करोति सद्वती भवति सत्त्वमेवैनं
गमयति वात्सप्रेणोप तिष्ठत एतेन वै वत्सप्रीर्भालन्दनोऽग्नेः प्रियं
धामावारुन्द्धाग्नेरेवैतेन प्रियं धामाव रुन्द्ध एकादशम्भवत्येकधैव यजमाने
वीर्यं दधाति स्तोमेन वै देवा अस्मिँल्लोक

आर्ध्नुवञ्छन्दोभिरमुष्मिन्त्स्तोमस्येव खलु वा एतद्रूपं यद्वात्सप्रं यद्वात्सप्रेणोपतिष्ठत इममेव तेन लोकमभि जयति यद्विष्णुक्रमान्क्रमतेऽमुमेव तैर्लोकमभि जयति पूर्वेद्युः प्र क्रामत्युत्तरेद्युरुप तिष्ठते तस्माद्योगेऽन्यासाम्प्रजानाम्मनः क्षेमेऽन्यासां तस्माद्यायावरः क्षेम्यस्येशे तस्माद्यायावरः क्षेम्यमध्यवस्यति मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै ॥१॥

अन्नपतेऽन्नस्य नो देहीत्याहाग्निर्वा अन्नपतिः स एवास्मा अन्नम्प्रयच्छत्य नमीवस्य शुष्मिण इत्याहायक्ष्मस्येति वावैतदाह प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याहाशिषमेवैतामा शास्त उदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैरेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्धयति चतसृभिरा सादयति चत्वारि च्छन्दाꣳसि च्छन्दोभिरेवातिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनꣳ समानानां करोति सद्वती भवति सत्त्वमेवैनं गमयति प्रेदग्ने ज्योतिष्मान्याहीत्याह ज्योतिरेवास्मिन्दधाति तनुवा वा एष हिनस्ति यꣳ हिनस्ति मा हिꣳसीस्तनुवा प्रजा इत्याह प्रजाभ्य एवैनꣳ शमयति रक्षाꣳसि वा एतद्यज्ञꣳ सचन्ते यदन उत्सर्जत्यक्रन्ददित्यन्वाह रक्षसामपहत्या अनसा वहन्त्यपचितिमेवास्मिन्दधाति तस्मादनस्वी च रथी चातिथीनामपचिततमौ अपचितिमान्भवति य एवं वेद समिधाग्निं दुवस्यतेति घृतानुषिक्तामवसिते समिधमा दधाति यथातिथय आगताय सर्पिष्वदातिथ्यं क्रियते तादृगेव त द्गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्योऽप्सु भस्म प्र

वेशयत्य॒प्सुयो॑नि॒र्वा अ॒ग्निः स्वामे॒वैनं॒ योनिं॑ गमयति ति॒सृभि॑ः प्र वे॑शयति त्रि॒वृद्वा अ॒ग्निर्यावा॑ने॒वाग्निस्तम्प्र॑ति॒ष्ठां ग॑मयति॒ परा॒ वा ए॒षो॑ऽग्निं व॑पति॒ यो॑ऽप्सु॒ भस्म॑ प्रवे॒शय॑ति॒ ज्योति॑ष्मतीभ्या॒मव॑ दधाति॒ ज्योति॑रे॒वास्मि॑न्दधाति॒ द्वाभ्या॒म्प्रति॑ष्ठित्यै॒ परा॒ वा ए॒ष प्र॒जाम्प॒शून्व॑पति॒ यो॑ऽप्सु॒ भस्म॑ प्रवे॒शय॑ति॒ पुन॑रू॒र्जा स॒ह र॒य्येति॒ पुन॑रु॒दैति॑ प्र॒जामे॒व प॒शूना॒त्मन्ध॑त्ते॒ पुन॑स्त्वादि॒त्या रु॒द्रा वस॑वः समि॑न्धता॒मित्या॑हे॒ता वा ए॒तं दे॒वता॒ अग्रे॒ समै॑न्धत॒ ताभि॑रे॒वैन॒ँ समि॑न्द्धे बोधा॒ स बो॒धीत्युप॑ तिष्ठते बो॒धय॑त्ये॒वैनं॒ तस्मा॑त्सु॒प्त्वा प्र॒जाः प्र बु॑ध्यन्ते यथास्था॒नमुप॑ तिष्ठते॒ तस्मा॑द्यथास्था॒नम्प॒शव॒ः पुन॒रेत्योप॑ तिष्ठन्ते ॥२॥

याव॑ती॒ वै पृ॑थि॒वी तस्यै॒ य॒म आधि॑पत्य॒म्परी॑याय॒ यो वै य॒मं दे॑व॒यज॑नम॒स्या अनि॑र्याच्या॒ग्निं चि॑नु॒ते य॒मायैन॒ँ स चि॑नु॒तेऽपे॒तेत्य॒ध्यव॑साययति य॒ममे॒व दे॑व॒यज॑नम॒स्यै नि॒र्याच्या॒त्मने॒ऽग्निं चि॑नुत इष्व॒ग्रेण॒ वा अ॒स्या अना॑मृतमि॒च्छन्तो॒ नावि॑न्द॒न्ते दे॒वा ए॒तद्यजु॑रपश्य॒न्नपे॒तेति॒ यदे॒तेना॑ध्यवसा॒यय॒त्यना॑मृत ए॒वाग्निं चि॑नु॒त उद्ध॑न्ति॒ यदे॒वास्या॑ अमे॒ध्यं तदप॑ हन्त्य॒ पोऽवो॑क्षति॒ शान्त्यै॒ सिक॑ता॒ नि व॑पत्ये॒तद्वा अ॒ग्नेर्वै॑श्वान॒रस्य॑ रू॒पँ रू॒पेणै॒व वै॑श्वान॒रमव॑ रुन्द्ध ऊषा॒न्नि व॑पति॒ पुष्टि॒र्वा ए॒षा प्र॒जन॑नं॒ यदू॒षाः पुष्ट्या॑मे॒व प्र॒जन॑ने॒ऽग्निं चि॑नु॒तेऽथो॑ सं॒ज्ञान॑ य॒व सं॒ज्ञान॒ँ ह्ये॑तत्प॑शू॒नां यदू॒षा द्यावा॑पृथि॒वी स॒हास्तां॒ ते वि॑य॒ती अ॑ब्रूता॒मस्त्वे॒व नौ॑ स॒ह य॒ज्ञिय॒मिति॒ यद॒मुष्या॑ य॒ज्ञिय॒मासी॒त्तद॒स्याम॑दधा॒त्त ऊषा॑ अभव॒न्यद॒स्या य॒ज्ञिय॒मासी॒त्तद॒मुष्या॒मदधा॒त्तद॒दश्च॒न्द्रम॑सि कृ॒ष्णमूषा॒न्निवप॑न्न॒दो ध्या॑ये॒द्द्यावा॑पृथि॒व्यो॑रे॒व य॒ज्ञिये॒ऽग्निं चि॑नु॒तेऽय॒ँ सो अ॒ग्निरिति॑ वि॒श्वा मि॑त्रस्य सू॒क्तम्भ॑वत्ये॒तेन॒ वै वि॒श्वामि॑त्रो॒ऽग्नेः प्रि॒यं

धामावारुन्द्धाग्नेरेवैतेन प्रियं धामाव रुन्द्धे छन्दोभिर्वै देवाः सुवर्गं लोकमायञ्चतस्रः प्राचीरुप दधाति चत्वारि च्छन्दाꣳसि च्छन्दोभिरेव तद्यजमानः सुवर्गं लोकमेति तेषाꣳ सुवर्गं लोकं यतां दिशः समव्लीयन्त ते द्वे पुरस्तात्समीची उपादधत द्वे पश्चात्समीची ताभिर्वै ते दिशोऽदृꣳहन्यद्द्वे पुरस्तात्समीची उपदधाति द्वे पश्चात्समीची दिशां विधृत्या

अथो पशवो वै छन्दाꣳसि पशूनेवास्मै समीचो दधात्यष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टावुप दधात्यष्टाक्षरा गायत्री सुवर्गं लोकमञ्जसा वेद सुवर्गस्य लोकस्य प्रज्ञात्यै त्रयोदश लोकम्पृणा उप दधात्येकविꣳशतिः सम्पद्यन्ते प्रतिष्ठा वा एकविꣳशः प्रतिष्ठा गार्हपत्य एकविꣳशस्यैव प्रतिष्ठां गार्हपत्यमनु प्रति तिष्ठति प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्द्धे त्रिचितीकं चिन्वीत द्वितीयं चिन्वानस्त्रय इमे लोका एष्वेव लोकेषु प्रति तिष्ठन्त्येकचितीकं चिन्वीत तृतीयं चिन्वान एकधा वै सुवर्गो लोक एकवृतैव सुवर्गं लोकमेति पुरीषेणाभ्यूहति तस्मान्माꣳसेनास्थि च्छन्नं न दुश्चर्मा भवति य एवं वेद पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रति तिष्ठति ॥३॥

वि वा एतौ द्विषाते यश्च पुराग्निर्यश्चोखायाꣳ समितमिति चतसृभिः सं नि वपति चत्वारि च्छन्दाꣳसि च्छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनौ तनुवा सꣳ शास्ति समितमित्याह तस्माद्ब्रह्मणा क्षत्रꣳ

समैति यत्सं न्युप्य वि हरति तस्माद्ब्रह्मणा क्षत्रं व्येत्यृ तुभिर्वा एतं दीक्षयन्ति स ऋतुभिरेव विमुच्यो मातेव पुत्रम्पृथिवी पुरीष्यमित्याहर्तुभिरेवैनं दीक्षयित्वर्तुभिर्वि मुञ्चति वैश्वानर्या शिक्यमा दत्ते स्वदयत्येवैनं नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्वा भवन्ति निर्ऋत्यै वा एतद्भागधेयं यत्तुषा निर्ऋत्यै रूपं कृष्णꣳ रूपेणैव निर्ऋतिं निरवदयत इमां दिशं यन्त्येषा वै निर्ऋत्यै दिक्स्वायामेव दिशि निर्ऋतिं निरवदयते स्वकृत इरिण उप दधाति प्रदरे वैतद्वै निर्ऋत्या आयतनꣳ स्व एवायतने निर्ऋतिं निरवदयते शिक्यमभ्युप दधाति नैर्ऋतो वै पाशः साक्षादेवैनं निर्ऋतिपाशान्मुञ्चति तिस्र उप दधाति त्रेधाविहितो वै पुरुषो यावानेव पुरुषस्तस्मान्निर्ऋतिमव यजते पराचीरुप दधाति पराचीमेवास्मान्निर्ऋतिम्प्र णुदतेऽप्रतीक्षमा यन्ति निर्ऋत्या अन्तर्हित्यै मार्जयित्वोप तिष्ठन्ते मेध्यत्वाय गार्हपत्यमुप तिष्ठन्ते निर्ऋतिलोक एव चरित्वा पूता देवलोकमुपावर्तन्त एकयोप तिष्ठन्त एकधैव यजमाने वीर्यं दधति निवेशनः सङ्गमनो वसूनामित्याह प्रजा वै पशवो वसु प्रजयैवैनम्पशुभिः समर्धयन्ति ॥४॥

पुरुषमात्रेण वि मिमीते यज्ञेन वै पुरुषः सम्मितो यज्ञपरुषैवैनं वि मिमीते यावान्पुरुष ऊर्ध्वबाहुस्तावान्भवत्येतावद्वै पुरुषे वीर्यं वीर्येणैवैनं वि मिमीते पक्षी भवति न ह्यपक्षः पतितुमर्हत्य रत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात्पक्षप्रवयाꣳसि वयाꣳसि व्याममात्रौ पक्षौ च पुच्छं च भवत्येतावद्वै पुरुषे वीर्यं वीर्यसम्मितो वेणुना वि मिमीत आग्नेयो वै वेणुः सयोनित्वाय यजुषा युनक्ति यजुषा कृषति व्यावृत्त्यै षड्गवेन कृषति षड्वा ऋतव ऋतुभिरेवैनं कृषति

यद्द्वादशगवेन संवत्सरेणैवे यं वा
अग्नेरतिदाहादबिभेत्सैतद्द्विगुणमपश्यत्कृष्टं चाकृष्टं च ततो वा इमां
नात्यदहद्यत्कृष्टं चाकृष्टं च भवत्यस्या अनतिदाहाय द्विगुणं त्वा
अग्निमुद्यन्तुमर्हतीत्याहुर्यत्कृष्टं चाकृष्टं च भवत्यग्नेरुद्यत्या एतावन्तो वै
पशवो द्विपादश्च चतुष्पादश्च तान्यत्प्राच उत्सृजेद्रुद्रायापि दध्याद्यद्दक्षिणा
पितृभ्यो नि धुवेद्यत्प्रतीचो रक्षांꣳसि हन्युरुदीच उत्सृजत्येषा वै
देवमनुष्याणांꣳ शान्ता दिक्तामेवैनाननूत्सृजत्यथो खल्विमां
दिशमुत्सृजत्यसौ वा आदित्यः प्राणः प्राणमेवैनाननूत्सृजति दक्षिणा
पर्यावर्तन्ते स्वमेव वीर्यमनु पर्यावर्तन्ते तस्माद्दक्षिणोऽर्ध आत्मनो
वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनु पर्यावर्तन्ते तस्मात्पराञ्चः पशवो वि
तिष्ठन्ते प्रत्यञ्च आ वर्तन्ते तिस्रस्तिस्रः सीताः कृषति त्रिवृतमेव यज्ञमुखे
वि यातयत्यो षधीर्वपति ब्रह्मणान्नमव रुन्द्धेऽर्केऽर्कश्चीयते
चतुर्दशभिर्वपति सप्त ग्राम्या ओषधयः सप्तारण्या उभयीषामवरुद्ध्या
अन्नंस्यान्नस्य वपत्यन्नंस्यान्नस्यावरुद्ध्यै कृष्टे वपति कृष्टे ह्योषधयः
प्रतितिष्ठन्त्य नुसीतं वपति
प्रजात्यै द्वादशसु सीतासु वपति द्वादश मासाः संवत्सरः
संवत्सरेणैवास्मा अन्नम्पचति यदग्निचिदनवरुद्धस्याश्नीयादवरुद्धेन
व्यृध्येत ये वनस्पतीनाम्फलग्रहयस्तानिध्मेऽपि प्रोक्षेदनवरुद्धस्यावरुद्ध्यै
दिग्भ्यो लोष्टान्त्समस्यति दिशामेव वीर्यमवरुध्य दिशां वीर्येऽग्निं चिनुते
यं द्विष्याद्यत्र स स्यात्तस्यै दिशो लोष्टमा हरेदिषमूर्जमहमित आ दद
इतीषमेवोर्जं तस्यै दिशोऽव रुन्द्धे क्षोधुको भवति यस्तस्यां दिशि
भवत्यु त्तरवेदिमुप वपत्युत्तरवेद्याꣳ ह्यग्निश्चीयतेऽथो पशवो वा
उत्तरवेदिः पशूनेवाव रुन्द्धेऽथो यज्ञपरुषोऽनन्तरित्यै ॥५॥

अग्ने तव श्रवो वय इति सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य सूक्तꣳ सूक्तेनैव वैश्वानरमव रुन्द्धे षड्भिर्नि वपति षड्वा ऋतवः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्द्धे समुद्रं वै नामैतच्छन्दः समुद्रमनु प्रजाः प्र जायन्ते यदेतेन सिकता नि वपति प्रजानाम्प्रजननायेन्द्रो वृत्राय वज्रम्प्राहरत्स त्रेधा व्यभवत्स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तः शरा अशीर्यन्त ताः शर्करा अभवन्तच्छर्कराणाꣳ शर्करत्वं वज्रो वै शर्कराः पशुरग्निर्यच्छर्कराभिरग्निम्परिमिनोति वज्रेणैवास्मै पशून्परि गृह्णाति तस्माद्वज्रेण पशवः परिगृहीतास्तस्मात्स्थेयानस्थेयसो नोप हरते त्रिसप्ताभिः पशुकामस्य परि मिनुयात्सप्त वै शीर्षण्याः प्राणाः प्राणाः पशवः प्राणैरेवास्मै पशूनव रुन्द्धे त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्या अपरिमिताभिः परि मिनुयादपरिमितस्यावरुद्ध्यै यं कामयेतापशुः स्यादित्यपरिमित्य तस्य शर्कराः सिकता व्यूहेदपरिगृहीत एवास्य विषूचीनꣳ रेतः परा सिञ्चत्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति परिमित्य तस्य शर्कराः सिकता व्यूहेत्परिगृहीत एवास्मै समीचीनꣳ रेतः सिञ्चति पशुमानेव भवति सौम्या व्यूहति सोमो वै रेतोधा रेत एव तद्दधाति गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः शम्युम्बार्हस्पत्यम्मेधो नोपानमत्सोऽग्निम्प्राविशत्सोऽग्नेः कृष्णो रूपं कृत्वोदायत सोऽश्वम्प्राविशत्सोऽश्वस्यावान्तरशफोऽभवद्यदश्वमाक्रमयति य एव मेधोऽश्वम्प्राविशत्तमेवाव रुन्द्धे प्रजापतिनाग्निश्चेतव्य इत्याहुः

प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजापतिनैवाग्निं चिनुते पुष्करपर्णमुप दधाति योनिर्वा अग्नेः पुष्करपर्णं सयोनिमेवाग्निं चिनुतेऽपाम्पृष्ठमसीत्युप दधात्यपां वा एतत्पृष्ठं यत्पुष्करपर्णं रूपेणैवैनदुप दधाति ॥६॥

ब्रह्म जज्ञानमिति रुक्ममुप दधाति ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत ब्रह्ममुखा एव तत्प्रजा यजमानः सृजते ब्रह्म जज्ञानमित्याह
तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद ब्रह्मवादिनो वदन्ति न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्य इति यत्पृथिव्यां चिन्वीत पृथिवीं शुचार्पयेन्नौषधयो न वनस्पतयः प्र जायेरन्यदन्तरिक्षे चिन्वीतान्तरिक्षं शुचार्पयेन्न वयांसि प्र जायेरन्यद्दिवि चिन्वीत दिवं शुचार्पयेन्न पर्जन्यो वर्षेद्रुक्ममुप दधात्यमृतं वै हिरण्यममृत एवाग्निं चिनुते प्रजात्यै हिरण्मयम्पुरुषमुप दधाति यजमानलोकस्य विधृत्यै यदिष्टकाया आतृण्णमनूपदध्यात्पशूनां च यजमानस्य च प्राणमपि दध्याद्दक्षिणतः प्राञ्चमुप दधाति
दाधार यजमानलोकं न पशूनां च यजमानस्य च प्राणमपि दधात्यथो खल्विष्टकाया आतृण्णमनूप दधाति प्राणानामुत्सृष्ट्यै द्रप्सश्चस्कन्देत्यभि मृशति होत्रास्वेवैनम्प्रति ष्ठापयति स्रुचावुप दधात्याज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरीमियं वै कार्ष्मर्यमय्यसावौदुम्बरीमे एवोप धत्ते तूष्णीमुप दधाति न हीमे यजुषाप्तुमर्हति दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीं तस्मादस्या असावुत्तराज्यस्य पूर्णां कार्ष्मर्यमयीं वज्रो वा आज्यं वज्रः कार्ष्मर्यो वज्रेणैव यज्ञस्य दक्षिणतो रक्षांस्यप हन्ति दध्नः पूर्णामौदुम्बरीं
पशवो वै दध्यूर्गुदुम्बरः पशुष्वेवोर्जं दधाति पूर्णे उप दधाति पूर्णे

एवैनममुष्मिँल्लोक उप तिष्ठते विराज्यग्निश्चेतव्य इत्याहुः स्रुग्वै विराडयत्स्रुचावुप दधाति विराज्येवाग्निं चिनुते यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति यज्ञमुखꣳ रुक्मो यद्रुक्मं व्याघारयति यज्ञमुखादेव रक्षाꣳस्यप हन्ति पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्माद्रक्षाꣳस्यप हन्त्य क्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै ॥७॥

स्वयमातृण्णामुप दधातीयं वै स्वयमातृण्णेमामेवोप धत्तेऽश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते प्रथमेष्टकोपधीयमाना पशूनां च यजमानस्य च प्राणमपि दधाति स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्या अग्नावग्निश्चेतव्य इत्याहुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मणस्तस्मै प्रथमामिष्टकां यजुष्कृताम्प्र यच्छेत्ताम्ब्राह्मणश्चोपदध्याताामग्नावेव तदग्निं चिनुत ईश्वरो वा एष आर्तिमार्तोर्योऽविद्वानिष्टकामुपदधाति त्रीन्वरान्दद्यात्त्रयो वै प्राणाः प्राणानाꣳ स्तृत्यै द्वावेव देयौ द्वौ हि प्राणावेक एव देय एको हि प्राणः पशुर्वा एष यदग्निर्न खलु वै पशव आयवसे रमन्ते दूर्वेष्टकामुप दधाति पशूनां धृत्यै द्वाभ्याम्प्रतिष्ठित्यै काण्डात्काण्डात्प्ररोहन्तीत्याह काण्डेनकाण्डेन ह्येषा प्रतितिष्ठत्ये वा नो दूर्वे प्र तनु सहस्रेण शतेन चेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै देवलक्ष्मं वै त्र्यालिखिता तामुत्तरलक्ष्माणं देवा उपादधताधरलक्ष्माणमसुरा यं कामयेत वसीयान्त्स्यादित्युत्तरलक्ष्माणं तस्योप दध्याद्वसीयानेव भवति यं कामयेत पापीयान्त्स्यादित्यधरलक्ष्माणं तस्योप दध्यादसुरयोनिमेवैनमनु

परा भावयति पापीयान्भवति त्र्यालिखिता भवतीमे वै
लोकास्त्र्यालिखितैभ्य एव लोकेभ्यो भ्रातृव्यमन्तरेत्य ङ्गिरसः सुवर्गं
लोकं यतः पुरोडाशः कूर्मो भूत्वानु प्रासर्पत्यत्कूर्ममुपदधाति यथा
क्षेत्रविदञ्जसा नयत्येवमेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति मेधो वा
एष पशूनां यत्कूर्मो यत्कूर्ममुपदधाति स्वमेव मेधम्पश्यन्तः पशव उप
तिष्ठन्ते श्मशानं वा एतत्क्रियते यन्मृतानाम्पशूनाँ शीर्षाण्युपधीयन्ते
यज्जीवन्तं कूर्ममुपदधाति तेनाश्मशानचिद्वास्तव्यो वा एष यत्कूर्मो मधु
वाता ऋतायत इति दध्ना मधुमिश्रेणाभ्यनक्ति स्वदयत्येवैनं ग्राम्यं वा
एतदन्नं यद्दध्यारण्यम्मधु यद्दध्ना मधुमिश्रेणाभ्यनक्त्युभयस्यावरुद्ध्यै
मही द्यौः पृथिवी च न इत्याहाभ्यामेवैनमुभयतः परि गृह्णाति
प्राञ्चमुप दधाति सुवर्गस्य लोकस्य समष्ट्यै पुरस्तात्प्रत्यञ्चमुप दधाति
तस्मात्पुरस्तात्प्रत्यञ्चः पशवो मेधमुप तिष्ठन्ते यो वा अपनाभिमग्निं चिनुते
यजमानस्य नाभिमनु प्र विशति स एनमीश्वरो हिँसितोरुलूखलमुप
दधात्येषा वा अग्नेर्नाभिः सनाभिमेवाग्निं चिनुते हिँसाया
औदुम्बरम्भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्द्धे
मध्यत उप दधाति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जा
भुञ्जत इयद्भवति प्रजापतिना यज्ञमुखेन सम्मितमव
हन्त्यन्नमेवाक वैष्णव्यर्चोप दधाति विष्णुर्वै यज्ञो वैष्णवा वनस्पतयो
यज्ञ एव यज्ञम्प्रति ष्ठापयति ॥८॥

एषां वा एतल्लोकानां ज्योतिः सम्भृतं यदुखा यदुखामुपदधात्येभ्य एव
लोकेभ्यो ज्योतिरव रुन्द्धे मध्यत उप दधाति मध्यत एवास्मै
ज्योतिर्दधाति तस्मान्मध्यतो ज्योतिरुपास्महे सिकताभिः पूरयत्येतद्वा

अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमव रुन्द्धे यं कामयेत क्षोधुकः स्यादित्यूनां तस्योप दध्यात्क्षोधुक एव भवति यं कामयेतानुपदस्यदन्नमद्यादिति पूर्णां तस्योप दध्यादनुपदस्यदेवान्नमत्ति सहस्रं वै प्रति पुरुषः पशूनां यच्छति सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुप दधाति सवीर्यत्वायो खायामपि दधाति प्रतिष्ठामेवैनद्गमयति व्यृद्धं वा एतत्प्राणैरमेध्यं यत्पुरुषशीर्षममृतं खलु वै प्राणा अमृतꣳ हिरण्यं प्राणेषु हिरण्यशल्कान्प्रत्यस्यति प्रतिष्ठामेवैनद्गमयित्वा प्राणैः समर्धयति दध्ना मधुमिश्रेण पूरयति मधव्योऽसानीति शृतातङ्क्येन मेध्यत्वाय ग्राम्यं वा एतदन्नं यद्दध्यारण्यम्मधु यद्दध्ना मधुमिश्रेण पूरयत्युभयस्यावरुद्ध्यै पशुशीर्षाण्युप दधाति पशवो वै पशुशीर्षाणि पशूनेवाव रुन्द्धे यं कामयेतापशुः स्यादिति विषूचीनानि तस्योप दध्याद्विषूच एवास्मात्पशून्दधात्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति समीचीनानि तस्योप दध्यात्समीच एवास्मै पशून्दधाति पशुमानेव भवति पुरस्तात्प्रतीचीनमश्वस्योप दधाति पश्चात्प्राचीनमृषभस्यापशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वानेवास्मै समीचो दधात्ये तावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तान्वा एतदग्नौ प्र दधाति यत्पशुशीर्षाण्युपदधात्यमुमारण्यमनु ते दिशामीत्याह ग्राम्येभ्य एव पशुभ्य आरण्यान्पशूञ्छुचमनूत्सृजति तस्मात्समावत्पशूनाम्प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृताः सर्पशीर्षमुप दधाति यैव सर्पे त्विषिस्तामेवाव रुन्द्धे यत्समीचीनम्पशुशीर्षैरुप दध्याद्ग्राम्यान्पशून्दꣳशुकाः स्युर्यद्विषूचीनमारण्यान्यजुरेव वदेदव तां त्विषिꣳ रुन्द्धे या सर्पे न

ग्राम्यान्पशून्हिनस्ति नारण्या नथो खलूपधेयमेव यदुपदधाति तेन तां त्विषिमव रुन्द्धे या सर्पे यद्यजुर्वदति तेन शान्तम् ॥६॥

पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्वि क्रियते यत्प्राचीनमैष्टकाद्यजुः क्रियते रेतोऽपस्या अपस्या उप दधाति योनावेव रेतो दधाति पञ्चोप दधाति पाङ्क्ताः पशवः पशूनेवास्मै प्र जनयति पञ्च दक्षिणतो वज्रो वा अपस्या वज्रेणैव यज्ञस्य दक्षिणतो रक्षाँस्यप हन्ति पञ्च पश्चात्प्राचीरुप दधाति पश्चाद्वै प्राचीनँ रेतो धीयते पश्चादेवास्मै प्राचीनँ रेतो दधाति पञ्च पुरस्तात्प्रतीचीरुप दधाति पञ्च पश्चात्प्राचीस्तस्मात्प्राचीनँ रेतो धीयते प्रतीचीः प्रजा जायन्ते पञ्चोत्तरतश्छन्दस्याः पशवो वै छन्दस्याः पशूनेव प्रजातान्त्स्वमायतनमभि पर्यूहत इयं वा अग्नेरतिदाहादबिभेत्सैता अपस्या अपश्यत्ता उपाधत्त ततो वा इमां नात्यदहद्यदपस्या उपदधात्यस्या अनतिदाहायो वाच हेयमददित्स ब्रह्मणान्नं यस्यैता उपधीयान्तै य उ चैना एवं वेददिति प्राणभृत उप दधाति रेतस्येव प्राणान्दधाति तस्माद्वदन्प्राणान्पश्यञ्छृणवन्पशुर्जायतेऽयम्पुरो भुव इति पुरस्तादुप दधाति प्राणमेवैताभिर्दाधारायं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधारायम्पश्चाद्विश्वव्यचा इति पश्चाच्चक्षुरेवैताभिर्दाधारेदमुत्तरात्सुवरित्युत्तरतः श्रोत्रमेवैताभिर्दाधारेयमुपरि मतिरित्युपरिष्टाद्वाचमेवैताभिर्दाधार दशदशोप दधाति सवीर्यत्वाया क्ष्णयोप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै याः प्राचीस्ताभिर्वसिष्ठ आर्ध्नोद्या दक्षिणा ताभिर्भरद्वाजो याः प्रतीचीस्ताभिर्विश्वामित्रो या उदीचीस्ताभिर्जमदग्निर्या

ऊर्ध्वास्ताभिर्विश्वकर्मा य एवमेतासामृद्धिं वेदर्ध्नोत्येव य
आसामेवम्बन्धुतां वेद बन्धुमान्भवति य आसामेवं क्लृप्तं वेद कल्पतेऽस्मै
य आसामेवमायतनं वेदायतनवान्भवति य आसामेवम्प्रतिष्ठां वेद प्रत्येव
तिष्ठति प्राणभृत उपधाय संयत उप दधाति प्राणानेवास्मिन्धित्वा
संयद्भिः सं यच्छति तत्संयतांँ संयत्त्वमथो प्राण एवापानं दधाति
तस्मात्प्राणापानौ सं चरतो विषूचीरुप दधाति
तस्माद्विष्वञ्चौ प्राणापानौ यद्वा अग्नेरसंयतमसुवर्ग्यमस्य
तत्सुवर्ग्योऽग्निर्यत्संयत उप दधाति समेवैनं यच्छति
सुवर्ग्यमेवाक स्त्र्यविर्वयः कृतमयानामित्याह वयोभिरेवायानव
रुन्द्धेऽयैर्वयांँसि सर्वतो वायुमतीर्भवन्ति तस्मादयँ सर्वतः पवते
॥१०॥

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । बृहत्युष्णिहा ककुत्सूचीभिः
शिम्यन्तु त्वा ॥
द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा । सच्छन्दा या च विच्छन्दाः
सूचीभिः शिम्यन्तु त्वा ॥
महानाम्नी रेवतयो विश्वा आशाः प्रसूवरीः । मेघ्या विद्युतो वाचः
सूचीभिः शिम्यन्तु त्वा ॥
रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः । अश्वस्य वाजिनस्त्वचि
सूचीभिः शिम्यन्तु त्वा ॥
नारीस्ते पत्नयो लोम वि चिन्वन्तु मनीषया । देवानाम्पत्नीर्दिशः सूचीभिः
शिम्यन्तु त्वा ॥
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुत

भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥११॥

कस्त्वा छ्यति कस्त्वा वि शास्ति कस्ते गात्राणि शिम्यति । क उ ते शमिता कविः ॥
ऋतवस्त ऋतुधा परुः शमितारो वि शासतु । संवत्सरस्य धायसा शिमीभिः शिम्यन्तु त्वा ॥
दैव्या अध्वर्यवस्त्वा छ्यन्तु वि च शासतु । गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्तः ॥
अर्धमासाः परूꣳषि ते मासाश्छ्यन्तु शिम्यन्तः । अहोरात्राणि मरुतो विलिष्टꣳ सूदयन्तु ते ॥
पृथिवी तेऽन्तरिक्षेण वायुश्छिद्रम्भिषज्यतु । द्यौस्ते नक्षत्रैः सह रूपं कृणोतु साधुया ॥
शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यः शमु ते तनुवे भुवत् ॥१२॥

इति पञ्चमकाण्डे द्वितीयः प्रपाठकः २

अथ पञ्चमकाण्डे तृतीयः प्रपाठकः ३

उत्सन्नयज्ञो वा एष यदग्निः किं वाहैतस्य क्रियते किं वा न यद्वै यज्ञस्य क्रियमाणस्यान्तर्यन्ति पूयति वा अस्य तदाश्विनीरुप दधात्यश्विनौ वै देवानाम्भिषजौ ताभ्यामेवास्मै भेषजं करोति पञ्चोप दधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्मै भेषजं करोत्यृतव्या उप दधात्यृतूनां क्लृप्त्यै पञ्चोप दधाति पञ्च वा ऋतवो यावन्त एवर्तवस्तान्कल्पयति समानप्रभृतयो भवन्ति समानोदर्कास्तस्मात्समाना ऋतव एकेन पदेन व्यावर्तन्ते

तस्मा॑दृ॒तवो॒ व्याव॑र्तन्ते प्रा॒ण॒भृत॒ उप॑ दधात्यृ॒तुष्वे॒व प्रा॒णान्द॑धाति॒ तस्मा॑त्सम॒ानाः सन्त॑ ऋ॒तवो॒ न जी॑र्य॒न्त्यथो॒ प्र ज॑नयत्ये॒वैना॑ नेष वै वा॒युर्यत्प्रा॒णो यद॑ृतव्या॑ उप॒धाय॑ प्रा॒णभृत॑ उप॒दधा॑ति॒ तस्मा॒त्सर्वा॑नृ॒तूननु॑ वा॒युरा व॑रीवर्ति वृ॒ष्टिसनी॒रुप॑ दधाति॒ वृष्टि॑मे॒वाव॑ रुन्द्धे यदे॑कु॒धोप॑द॒ध्यादेक॑मृ॒तुं व॑र्षे॒दनुपरि॒हार॑ꣳ सादयति॒ तस्मा॒त्सर्वा॑नृ॒तून्व॑र्षति॒ यत्प्रा॑ण॒भृत॑ उप॒धाय॑ वृ॒ष्टिसनी॑रुप॒दधा॑ति॒ तस्मा॑द्वा॒युप्र॑च्युता दि॒वो वृष्टि॑रीर्ते प॒शवो॒ वै व॑य॒स्या॑ नाना॑मनस॒ः खलु॒ वै प॒शवो॒ नाना॑व्रता॒स्ते॑ऽप ए॒वाभि सम॑नसो॒ यं का॒मयै॑ताप॒शुः स्या॒दिति॑ वय॒स्या॑स्तस्यौ॑प॒धाया॑प॒स्या॑ उप॑ दध्या॒दसं॑ज्ञानमे॒वास्मै॑ प॒शुभि॑ः करोत्यप॒शुरे॒व भ॑वति॒ यं का॒मयै॑त पशु॒मान्त्स्या॒दित्य॑प॒स्या॑स्तस्यौ॑प॒धाय॑ वय॒स्या॑ उप॑ दध्यात्सं॒ज्ञान॑मे॒वास्मै॑ प॒शुभि॑ः करोति पशु॒माने॒व भ॑वति॒ चत॑स्रः पु॒रस्ता॒दुप॑ दधाति॒ तस्मा॑च्च॒त्वारि॒ चक्षु॑षो रू॒पाणि॒ द्वे शु॒क्ले द्वे कृ॒ष्णे मू॑र्ध॒न्वती॑र्भवन्ति॒ तस्मा॑त्पु॒रस्ता॑न्मू॒र्धा पञ्च॒ दक्षि॑णाया॒ꣳ श्रोण्या॒मुप॑ दधाति॒ पञ्चोत्त॑रस्या॒ं तस्मा॑त्प॒श्चाद्वर्षी॑यान्पु॒रस्ता॑त्प्रवणः प॒शु॒र्ब॒स्तो वय॒ इति॒ दक्षि॒णेऽꣳस॒ उप॑ दधाति वृ॒ष्णिर्व॑य॒ इत्यु॒त्तरेऽꣳसा॑वे॒व प्रति॑ दधाति व्या॒घ्रो वय॒ इति॒ दक्षि॑णे प॒क्ष उप॑ दधाति सि॒ꣳहो वय॒ इत्यु॒त्त॑रे प॒क्षयो॑रे॒व वी॒र्य॑ं दधाति॒ पुरु॑षो॒ वय॒ इति॒ मध्ये॒ तस्मा॒त्पुरु॑षः पशू॒नामधि॑पतिः ॥१॥

इन्द्रा॑ग्नी॒ अव्य॑थमाना॒मिति॑ स्वयमातृ॒ण्णामुप॑ दधातीन्द्रा॒ग्निभ्या॒ं वा इ॒मौ लो॒कौ विधृ॑ताव॒नयो॑र्लो॒कयो॒र्विधृ॑त्या॒ अधृ॑तेव॒ वा ए॒षा यन्म॑ध्य॒मा चिति॑र॒न्तरि॑क्षमिव॒ वा ए॒षेन्द्रा॑ग्नी॒ इत्या॑हेन्द्रा॒ग्नी वै दे॒वाना॑मोज॒ोभृता॒वोज॑सै॒वैना॑म॒न्तरि॑क्षे चिनु॒ते धृत्यै॑ स्वयमातृ॒ण्णामुप॑ दधात्य॒न्तरि॑क्षं वै स्व॑यमातृ॒ण्णान्तरि॑क्षमे॒वोप॑ ध॒त्तेऽश्व॒मुप॑ घ्रापयति

प्राणमेवास्यां दधात्यथौ प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते
स्वयमातृरणा भवति प्राणानामुत्सृष्ट्या अथौ सुवर्गस्य लोकस्यानुख्यात्यै
देवानां वै सुवर्गं लोकं यतां दिशः समव्लीयन्त
त एता दिश्या अपश्यन्ता उपादधत ताभिर्वै ते दिशोऽदृꣳहन्यद्दिश्या
उपदधाति दिशां विधृत्यै दश प्राणभृतः पुरस्तादुप दधाति
नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद्धत्ते तस्मात्पुरस्तात्प्राणा
ज्योतिष्मतीमुत्तमामुप दधाति तस्मात्प्राणानां वाग्ज्योतिरुत्तमा दशोप
दधाति दशाक्षरा विराड्विराट्छन्दसां ज्योतिर्ज्योतिरेव पुरस्ताद्धत्ते
तस्मात्पुरस्ताज्ज्योतिरुपास्महे छन्दाꣳसि
पशुष्वाजिमयुस्तान्बृहत्युदजयत्तस्माद्बार्हताः पशव उच्यन्ते मा च्छन्द इति
दक्षिणत उप दधाति तस्माद्दक्षिणावृतो मासाः पृथिवी छन्द इति
पश्चात्प्रतिष्ठित्या अग्निर्देवतेत्युत्तरत ओजो वा अग्निरोज एवोत्तरतो धत्ते
तस्मादुत्तरतोऽभिप्रयायी जयति षट्त्रिꣳशत्सं पद्यन्ते षट्त्रिꣳशदक्षरा
बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनव रुन्द्धे बृहती छन्दसाꣳ
स्वाराज्यम्परीयाय यस्यैता उपधीयन्ते गच्छति स्वाराज्यꣳ सप्त
वालखिल्याः पुरस्तादुप दधाति सप्त पश्चात्सप्त वै शीर्षण्याः प्राणा
द्वाववाञ्चौ प्राणानाꣳ सवीर्यत्वाय मूर्धासि राडिति पुरस्तादुप दधाति
यन्त्री राडिति पश्चात्प्राणानेवास्मै समीचो दधाति ॥२॥

देवा वै यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता अक्ष्णयास्तोमीया
अपश्यन्ता अन्यथानूच्यान्यथोपादधत तदसुरा नान्ववायन्ततो देवा
अभवन्परासुरा यदक्ष्णयास्तोमीया अन्यथानूच्यान्यथोपदधाति
भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो भवत्याशुस्त्रिवृदिति

पुरस्तादुप दधाति यज्ञमुखं वै त्रिवृद्यज्ञमुखमेव पुरस्ताद्वि यातयति व्योम सप्तदश इति दक्षिणतोऽन्नं वै व्योमान्नँ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते धरुण एकविँश इति पश्चात्प्रतिष्ठा वा एकविँशः प्रतिष्ठित्यै भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्त ओजः पञ्चदश ओज एवोत्तरतो धत्ते

तस्मादुत्तरतोऽभिप्रयायी जयति प्रतूर्तिरष्टादश इति पुरस्तादुप दधाति द्वौ त्रिवृतावभिपूर्वं यज्ञमुखे वि यातयत्य भिवर्तः सविँश इति दक्षिणतोऽन्नं वा अभिवर्तोऽन्नँ सविँशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते वर्चो द्वाविँश इति पश्चाद्यद्विँशतिर्द्वे तेन विराजौ यद्द्वे प्रतिष्ठा तेन विराजोरेवाभिपूर्वमन्नाद्ये प्रति तिष्ठति तपो नवदश इत्युत्तरतस्तस्मात्सव्यो हस्तयोस्तपस्वितरो योनिश्चतुर्विँश इति पुरस्तादुप दधाति चतुर्विँशत्यक्षरा गायत्री गायत्री यज्ञमुखं यज्ञमुखमेव पुरस्ताद्वि यातयति गर्भाः पञ्चविँश इति दक्षिणतोऽन्नं वै गर्भा अन्नम्पञ्चविँशोन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यत ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठति सम्भरणस्त्रयोविँश इत्युत्तरतस्तस्मात्सव्यो हस्तयोः सम्भार्यतरः क्रतुरेकत्रिँश इति पुरस्तादुप दधाति वाग्वै क्रतुर्यज्ञमुखं वाग्यज्ञमुखमेव पुरस्ताद्वि यातयति ब्रध्नस्य विष्टपं चतुस्त्रिँश इति दक्षिणतोऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः प्रतिष्ठा त्रयस्त्रिँश इति पश्चात्प्रतिष्ठित्यै नाकः षट्त्रिँश इत्युत्तरतः सुवर्गो वै लोको नाकः सुवर्गस्य लोकस्य समष्ट्यै ॥३॥

अग्नेर्भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा

यज्ञमुखम्ब्रह्म यज्ञमुखं त्रिवृद्यज्ञमुखमेव पुरस्ताद्वि यातयति
नृचक्षसाम्भागोऽसीति दक्षिणतः शुश्रुवाꣳसो वै नृचक्षसोऽन्नं धाता
जातायैवास्मा अन्नमपि दधाति तस्माज्जातोऽन्नमत्ति जनित्रꣳ स्पृतꣳ
सप्तदशः स्तोम इत्याहान्नं वै जनित्रमन्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते
तस्माद्दक्षिणेनान्नमद्यते मित्रस्य भागोऽसीति पश्चात्प्राणो वै मित्रोऽपानो
वरुणः प्राणापानावेवास्मिन्दधाति दिवो वृष्टिर्वाताः स्पृता एकविꣳशः
स्तोम इत्याह प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्या इन्द्रस्य
भागोऽसीत्युत्तरत ओजो वा इन्द्र ओजो विष्णुरोजः क्षत्रमोजः पञ्चदश
ओज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति वसूनाम्भागोऽसीति
पुरस्तादुप दधाति यज्ञमुखं वै वसवो यज्ञमुखꣳ रुद्रा यज्ञमुखं
चतुर्विꣳशो यज्ञमुखमेव पुरस्ताद्वि यातयत्या दित्यानाम्भागोऽसीति
दक्षिणतोऽन्नं वा आदित्या अन्नम्मरुतोऽन्नं गर्भा अन्नम्पञ्चविꣳशोऽन्नमेव
दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यतेऽदित्यै भागोऽसीति पश्चात्प्रतिष्ठा वा
अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै देवस्य
सवितुर्भागोऽसीत्युत्तरतो ब्रह्म वै देवः सविता ब्रह्म बृहस्पतिर्ब्रह्म
चतुष्टोमो ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोऽर्धो ब्रह्मवर्चसितरः
सावित्रवती भवति प्रसूत्यै तस्माद्ब्राह्मणानामुदीची सनिः प्रसूता
धर्त्रश्चतुष्टोम इति पुरस्तादुप दधाति यज्ञमुखं वै धर्त्रो यज्ञमुखं चतुष्टोमो
यज्ञमुखमेव पुरस्ताद्वि यातयति यावानाम्भागोऽसीति दक्षिणतो
मासा वै यावा अर्धमासा अयावास्तस्माद्दक्षिणावृतो मासा अन्नं वै यावा
अन्नम्प्रजा अन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यत
ऋभूणाम्भागोऽसीति पश्चात्प्रतिष्ठित्यै विवर्तोऽष्टाचत्वारिꣳश
इत्युत्तरतोऽनयोर्लोकयोः सवीर्यत्वाय तस्मादिमौ लोकौ समावद्वीर्यौ यस्य

मुख्यंवतीः पुरस्तादुपधीयन्ते मुख्यं एव भंवत्यास्य मुख्यौं जायते यस्यान्नंवतीर्दक्षिणतोऽत्त्यन्नमास्यान्नादो जायते यस्यं प्रतिष्ठावंतीः पश्चात्प्रत्येव तिष्ठति यस्यौजंस्वतीरुत्तरत ओजस्व्यैव भंवत्यास्यौजस्वी जायतेऽर्को वा एष यदग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रं यदेषा विधा विधीयतेऽर्क एव तदर्क्यमनु वि धीयतेऽत्त्यन्नमास्यान्नादो जायते यस्यैषा विधा विधीयते य उं चैनामेवं वेद सृष्टीरुपं दधाति यथासृष्टमेवावं रुन्द्धे न वा इदं दिवा न नक्तंमासीदव्यावृत्तं ते देवा एता व्युंष्टीरपश्यन्ता उपादधत ततो वा इदं व्यौच्छद्यस्यैता उंपधीयन्ते व्यैवास्मा उच्छत्यथो तमं एवापं हते ॥४॥

अग्ने जातान्प्र णुंदा नः सपत्नानिति पुरस्तादुपं दधाति जातानेव भ्रातृंव्यान्प्र णुंदते सहंसा जातानिति पश्चाज्जनिष्यमाणानेव प्रति नुदते चतुश्चत्वारि ँशः स्तोम इति दक्षिणतो ब्रंह्मवर्चसं वै चंतुश्चत्वारि ँशो ब्रंह्मवर्चसमेव दंक्षिणतो धंत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितंरः षोडश स्तोम इत्युत्तरत ओजो वै षोडश ओजं एवोत्तंरतो धंत्ते तस्मादुत्तरतोऽभिप्रयायी जंयति वज्रो वै चंतुश्चत्वारि ँशो वज्रंः षोडशो यदेते इष्टंके उपदधाति जाता ँश्चैव जंनिष्यमाणा ँश्च भ्रातृंव्यान्प्रणुद्य वज्रमनु प्र हंरति स्तृत्यै पुरीषवतीम्मध्य उपं दधाति पुरीषं वै मध्यमात्मनः सात्मानमेवाग्निं चिंनुते सात्मामुष्मिँल्लोके भंवति य एवं वेदै ता वा असपत्ना नामेष्टंका यस्यैता उंपधीयन्ते नास्यं सपत्नो भवति पशुर्वा एष यदग्निर्विराजं उत्तमायां चित्यामुपं दधाति विराजंमेवोत्तमाम्पशुषु दधाति तस्मात्पशुमानुत्तमां वाचं वदति दशदशोपं दधाति सवीर्यत्वायां क्ष्णयोपं दधाति तस्मादक्ष्णया

पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यानि वै छन्दांꣳसि सुवर्ग्याण्यासन्तैर्देवाः सुवर्गं लोकमायन्तेनर्षयोऽश्राम्यन्ते तपोऽतप्यन्त तानि तपसापश्यन्तेभ्य एता इष्टका निरमिमतेवश्छन्दो वरिवश्छन्द इति ता उपादधत ताभिर्वै ते सुवर्गं लोकमायन्यदेता इष्टका उपदधाति यान्येव च्छन्दांꣳसि सुवर्ग्याणि तैरेव यजमानः सुवर्गं लोकमेति यज्ञेन वै प्रजापतिः प्रजा असृजत ताः स्तोमभागैरेवासृजत यत्स्तोमभागा उपदधाति प्रजा एव तद्यजमानः सृजते बृहस्पतिर्वा एतद्यज्ञस्य तेजः समभरद्यत्स्तोमभागा यत्स्तोमभागा उपदधाति सतेजसमेवाग्निं चिनुते बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यद्यत्स्तोमभागा यत्स्तोमभागा उपदधाति यज्ञस्य प्रतिष्ठित्यै सप्तसप्तोप दधाति सवीर्यत्वाय तिस्रो मध्ये प्रतिष्ठित्यै ॥५॥

रश्मिरित्येवादित्यमसृजत प्रेतिरिति धर्ममन्वितिरिति दिवꣳ सन्धिरित्यन्तरिक्षं प्रतिधिरिति पृथिवीं विष्टम्भ इति वृष्टिं प्रवेत्यहरनुवेति रात्रिमुशिगिति वसून्प्रकेत इति रुद्रान्त्सुदीतिरित्यादित्यानोज इति पितॄꣳ स्तन्तुरिति प्रजाः पृतनाषाडिति पशून्रेवदित्योषधीरभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेत्येव दक्षिणतो वज्रम्पर्यौहदभिजित्यै ताः प्रजा अपप्राणा असृजत तास्वधिपतिरसीत्येव प्राणमदधाद्यन्तेत्यपानꣳ सꣳसर्प इति चक्षुर्वयोधा इति श्रोत्रं
ताः प्रजाः प्राणतीरपानतीः पश्यन्तीः शृण्वतीर्न मिथुनी अभवन्तासु त्रिवृदसीत्येव मिथुनमदधात्ताः प्रजा मिथुनी भवन्तीर्न प्राजायन्त ताः सꣳरोहोऽसि नीरोहोऽसीत्येव प्राजनयत्ताः प्रजाः प्रजाता न प्रत्यतिष्ठन्ता वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्येवैषु लोकेषु प्रत्यस्थापयद्यदाह

वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीति प्रजा एव प्रजाता एषु लोकेषु प्रति ष्ठापयति सात्मान्तरिक्षꣳ रोहति सप्राणोऽमुष्मिँल्लोके प्रति तिष्ठत्यव्यर्धुकः प्राणापानाभ्याम्भवति य एवं वेद ॥६॥

नाकसद्भिर्वै देवाः सुवर्गं लोकमायन्तन्नाकसदां नाकसत्त्वं यन्नाकसद उपदधाति नाकसद्भिरेव तद्यजमानः सुवर्गं लोकमेति सुवर्गो वै लोको नाको यस्यैता उपधीयन्ते नास्मा अकम्भवति यजमानायतनं वै नाकसदो यन्नाकसद उपदधात्यायतनमेव तद्यजमानः कुरुते पृष्ठानां वा एतत्तेजः सम्भृतं यन्नाकसदो यन्नाकसद उपदधाति पृष्ठानामेव तेजोऽव रुन्द्धे पञ्चचोडा उप दधात्यप्सरस एवैनमेता भूता अमुष्मिँल्लोक उप शेरेऽथो तनूपानीरेवैता यजमानस्य यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आ वृश्चति ताजगार्तिमार्च्छत्युत्तरा नाकसद्भ्य उप दधाति यथा जायामानीय गृहेषु निषादयति तादृगेव तत्पश्चात्प्राचीमुत्तमामुप दधाति तस्मात्पश्चात्प्राची पत्नयन्वास्ते स्वयमातृणां च विकर्णीं चोत्तमे उप दधाति प्राणो वै स्वयमातृणायुर्विकर्णी प्राणं चैवायुश्च प्राणानामुत्तमौ धत्ते तस्मात्प्राणश्चायुश्च प्राणानामुत्तमौ नान्यामुत्तरामिष्टकामुप दध्याद्यदन्यामुत्तरामिष्टकामुपदध्यात्पशूनां च यजमानस्य च प्राणं चायुश्चापि दध्यात्तस्मान्नान्योत्तरेष्टकोपधेया स्वयमातृणामुप दधात्यसौ वै स्वयमातृणामूमेवोप धत्तेऽश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते स्वयमातृणा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्या एषा वै देवानां विक्रान्तिर्यद्विकर्णी यद्विकर्णीमुपदधाति देवानामेव विक्रान्तिमनु वि क्रमत उत्तरत उप दधाति तस्मादुत्तरतउपचारोऽग्निर्वायुमती भवति

समिद्ध्यै ॥७॥

छन्दाꣳस्युप दधाति पशवो वै छन्दाꣳसि पशूनेवाव रुन्द्धे छन्दाꣳसि वै
देवानां वामम्पशवो वाममेव पशूनव रुन्द्ध एताꣳह वै
यज्ञसेनश्चैत्रियायणश्चितिं विदां चकार तया वै स पशूनवारुन्द्ध
यदेतामुपदधाति पशूनेवाव रुन्द्धे गायत्रीः पुरस्तादुप दधाति
तेजो वै गायत्री तेज एव मुखतो धत्ते मूर्धन्वतीर्भवन्ति मूर्धानमेवैनꣳ
समानानां करोति त्रिष्टुभ उप दधातीन्द्रियं वै त्रिष्टुगिन्द्रियमेव मध्यतो
धत्ते जगतीरुप दधाति जागता वै पशवः पशूनेवाव रुन्द्धेऽनुष्टुभ उप
दधाति प्राणा वा अनुष्टुप्प्राणानामुत्सृष्ट्यै बृहतीरुष्णिहाः
पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि च्छन्दाꣳस्युप दधाति
विषुरूपा वै पशवः पशवश्छन्दाꣳसि विषुरूपानेव पशूनव रुन्द्धे
विषुरूपमस्य गृहे दृश्यते यस्यैता उपधीयन्ते य उ चैना एवं
वेदातिच्छन्दसमुप दधात्यतिच्छन्दा वै सर्वाणि च्छन्दाꣳसि
सर्वेभिरेवैनं छन्दोभिश्चिनुते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा
यदतिच्छन्दसमुपदधाति वर्ष्मैवैनꣳ समानानां करोति द्विपदा उप दधाति
द्विपाद्यजमानः प्रतिष्ठित्यै ॥८॥

सर्वाभ्यो वै देवताभ्योऽग्निश्चीयते यत्सयुजो नोपदध्याद्देवता अस्याग्निं
वृञ्जीरन्यत्सयुज उपदधात्यात्मनैवैनꣳ सयुजं चिनुते नाग्निना व्यृध्यतेऽथो
यथा पुरुषः स्नावभिः सन्तत एवमेवैताभिरग्निः सन्ततोऽग्निना वै देवाः
सुवर्गं लोकमायन्ता अमूः कृत्तिका अभवन्यस्यैता उपधीयन्ते सुवर्गमेव
लोकमेति गच्छति प्रकाशं चित्रमेव भवति मण्डलेष्टका उप दधातीमे वै

लोका मण्डलेष्टका
इमे खलु वै लोका देवपुरा देवपुरा एव प्र विशति नार्तिमार्च्छत्यग्निं चिक्यानो विश्वज्योतिष उप दधातीमानेवैताभिर्लोकाञ्ज्योतिष्मतः कुरुतेऽथो प्राणानेवैता यजमानस्य दाध्रत्येता वै देवताः सुवर्ग्यास्ता एवान्वारभ्य सुवर्गं लोकमेति ॥९॥

वृष्टिसनीरुप दधाति वृष्टिमेवाव रुन्द्धे यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳसादयति तस्मात्सर्वानृतून्वर्षति पुरोवातसनिरसीत्याहैतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्द्धे संयानीभिर्वै देवा इमाँल्लोकान्त्समयुस्तत्संयानीनाꣳ संयानित्वं यत्संयानीरुपदधाति यथाप्सु नावा संयात्येवमेवैताभिर्यजमान इमाँल्लोकान्त्सं याति प्लवो वा एषोऽग्नेर्यत्संयानीर्यत्संयानीरुपदधाति प्लवमेवैतमग्नय उप दधात्यु त यस्यैतासूपहितास्वापोऽग्निꣳ हरन्त्यहृत एवास्याग्नि रादित्येष्टका उप दधात्यादित्या वा एतम्भूत्यै प्रति नुदन्ते योऽलम्भूत्यै सन्भूतिं न प्राप्नोत्यादित्या एवैनम्भूतिं गमयन्त्यसौ वा एतस्यादित्यो रुचमा दत्ते योऽग्निं चित्वा न रोचते यदादित्येष्टका उपदधात्यसावेवास्मिन्नादित्यो रुचं दधाति यथासौ देवानाꣳ रोचत एवमेवैष मनुष्याणाꣳ रोचते घृतेष्टका उप दधात्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसाऽनुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिन्तेजो दधाति प्रजापतिरग्निमचिनुत स यशसा व्यार्ध्यत स एता यशोदा अपश्यत्ता उपाधत्त ताभिर्वै स यश आत्मन्नधत्त यद्यशोदा उपदधाति यश एव ताभिर्यजमान आत्मन्धत्ते पञ्चोप दधाति पाङ्क्तः पुरुषो यावानेव पुरुषस्तस्मिन्यशो दधाति ॥१०॥

देवासुराः संयत्ता आसन्कनीयाँसो देवा आसन्भूयाँसोऽसुरास्ते देवा एता इष्टका अपश्यन्ता उपादधत भूयस्कृदसीत्येव भूयाँसोऽभवन्वनस्पतिभिरोषधीभिर्वरिवस्कृदसीतीमामजयन्प्राच्यसीति प्राचीं दिशमजयन्नूर्ध्वासीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन्ततो देवा अभवन्परासुरा यस्यैता उपधीयन्ते भूयानेव भवत्यभीमाँल्लोकाञ्जयति भवत्यात्मना परास्य भ्रातृव्यो भवत्य प्सुषदसि श्येनसदसीत्याहैतद्वा अग्ने रूपँ रूपेणैवाग्निमव रुन्द्धे पृथिव्यास्त्वा द्रविणे सादयामीत्याहेमानेवैताभिर्लोकान्द्रविणावतः कुरुत आयुष्या उप दधात्यायुरेवास्मिन्दधात्य ग्ने यत्ते परँ हृन्नामेत्याहैतद्वा अग्नेः प्रियं धाम प्रियमेवास्य धामोपाप्नोति तावेहि सँ रभावहा इत्याह व्यैवैनेन परि धत्ते पाञ्चजन्येष्वप्येध्यग्न इत्याहैष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकस्तस्मादेवमाह र्तव्या उप दधात्येतद्वा ऋतूनाम्प्रियं धाम यदृतव्या ऋतूनामेव प्रियं धामाव रुन्द्धे सुमेक इत्याह संवत्सरो वै सुमेकः
संवत्सरस्यैव प्रियं धामोपाप्नोति ॥११॥

प्रजापतेरक्ष्यश्वयत्तत्परापतत्तदश्वोऽभवद्यदश्वयत्तदश्वस्याश्वत्वं तद्देवा अश्वमेधेनैव प्रत्यदधुरेष वै प्रजापतिँ सर्वं करोति योऽश्वमेधेन यजते सर्व एव भवति सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजँ सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन्त्सर्वम्पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदो त्तरं वै तत्प्रजापतेरक्ष्यश्वयत्तस्मादश्वस्योत्तरतोऽव द्यन्ति

दक्षिणतोऽन्येषाम्पशूनाम्वैतसः कटो भवत्यप्सुयोनिर्वा अश्वोऽप्सुजो वैतसः स्व एवैनं योनौ प्रति ष्ठापयति चतुष्टोमः स्तोमो भवति सरङ्घ वा अश्वस्य सक्थ्यावृहत्तद्देवाश्चतुष्टोमेनैव प्रत्यदधुर्यच्चतुष्टोम स्तोमो भवत्यश्वस्य सर्वत्वाय ॥१२॥

इति पञ्चमकाण्डे तृतीयः प्रपाठकः ३

अथ पञ्चमकाण्डे चतुर्थः प्रपाठकः ४

देवासुराः संयत्ता आसन्ते न व्यजयन्त स एता इन्द्रस्तनूरपश्यत्ता उपाधत्त ताभिर्वै स तनुवमिन्द्रियं वीर्यमात्मन्नधत्त ततो देवा अभवन्परासुरा यदिन्द्रतनूरुपदधाति तनुवमेव ताभिरिन्द्रियं वीर्यं यजमान आत्मन्धत्तेऽथो सेन्द्रमेवाग्निँ सतनुं चिनुते भवत्यात्मना परास्य भ्रातृव्यो भवति यज्ञो देवेभ्योऽपाक्रामत्तमवरुधं नाशक्नुवन्त एता यज्ञतनूरपश्यन्ता उपादधत ताभिर्वै ते यज्ञमवारुन्धत यद्यज्ञतनूरुपदधाति यज्ञमेव ताभिर्यजमानोऽव रुन्द्धे त्रयस्त्रिँ शतमुप दधाति त्रयस्त्रिँशद्वै देवता देवता एवाव रुन्द्धेऽथो सात्मानमेवाग्निँ सतनुं चिनुते सात्मामुष्मिँल्लोके भवति य एवं वेद

ज्योतिष्मतीरुप दधाति ज्योतिरेवास्मिन्दधात्येताभिर्वा अग्निश्चितो ज्वलति ताभिरेवैनँ समिन्द्ध उभयोरस्मै लोकयोर्ज्योतिर्भवति

नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतीँषि तान्येवाव रुन्द्धे सुकृतां वा एतानि ज्योतीँषि यन्नक्षत्राणि तान्येवाप्नोत्यथो अनूकाशमेवैतानि ज्योतीँषि कुरुते सुवर्गस्य लोकस्यानुख्यात्यै

यत्सँस्पृष्टा उपदध्याद्वृष्ट्यै लोकमपि दध्यादवर्षुकः पर्जन्यः स्यादसँस्पृष्टा उप दधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो

भवति पुरस्तादन्याः प्रतीचीरुप दधाति पश्चादन्याः
प्राचीस्तस्मात्प्राचीनानि च प्रतीचीनानि च नक्षत्राण्या वर्तन्ते ॥१॥

ऋतव्या उप दधात्यृतूनां क्लृप्त्यै द्वन्द्वमुप दधाति तस्माद्द्वन्द्वमृतवोऽधृतेव
वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषा द्वन्द्वमन्यासु चितीषूप
दधाति चतस्रो मध्ये धृत्या अन्तःश्लेषणं वा एताश्चितीनां यदृतव्या
यदृतव्या उपदधाति चितीनां विधृत्या अवकामनूप दधात्येषा वा
अग्नेर्योनिः सयोनिमेवाग्निं चिनुत उवाच ह विश्वामित्रोऽददित्स ब्रह्मणान्नं
यस्यैता उपधीयान्तै य उ चैना एवं वेददिति संवत्सरो वा एतम्प्रतिष्ठायै
नुदते योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं
चिनुते षड्वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठत्ये ता वा
अधिपत्नीर्नामेष्टका यस्यैता उपधीयन्तेऽधिपतिरेव समानानाम्भवति
यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आ वृश्चति
ताजगार्तिमार्च्छत्य ङ्गिरसः सुवर्गं लोकं यन्तो या यज्ञस्य
निष्कृतिरासीत्तामृषिभ्यः प्रत्यौहन्तद्धिरण्यमभवद्यद्धिरण्यशल्कैः प्रोक्षति
यज्ञस्य निष्कृत्या अथो भेषजमेवास्मै करोत्यथो रूपेणैवैनꣳ
समर्धयत्यथो हिरण्यज्योतिषैव सुवर्गं लोकमेति साहस्रवता प्रोक्षति
साहस्रः प्रजापतिः प्रजापतेराप्त्या इमा मे अग्न इष्टका धेनवः सन्त्वित्याह
धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्रामुष्मिँल्लोक उप तिष्ठन्ते ॥२॥

रुद्रो वा एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः
स्तनम्प्रेप्सत्येवं वा एष एतर्हि भागधेयम्प्रेप्सति तस्मै यदाहुतिं न
जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनैवैनꣳ

शमयति नार्तिमार्च्छत्यध्वर्युर्न यजमानो यद्ग्राम्याणाम्पशूनां पयसा जुहुयाद्ग्राम्यान्पशूञ्छुचार्पयेद्यदारण्यानामारण्याञ्जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नारण्या नथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाहुत्यैव जुहोति

न ग्राम्यान्पशून्हिनस्ति नारण्या नङ्गिरसः सुवर्गं लोकं यन्तोऽजायां घर्मम्प्रासिञ्चन्त्सा शोचन्ती पर्णम्पराजिहीत सोऽर्कोऽभवत्तदर्कस्यार्कत्वमर्कपर्णेन जुहोति सयोनित्वायो दङ्तिष्ठञ्जुहोत्येषा वै रुद्रस्य दिक्स्वायामेव दिशि रुद्रं निरवदयते चरमायामिष्टकायां जुहोत्यन्तत एव रुद्रं निरवदयते त्रेधाविभक्तं जुहोति त्रय इमे लोका इमानेव लोकान्त्समावद्वीर्यान्करोती यत्यग्रे जुहोत्यथेयत्यथेयति त्रय इमे लोका एभ्य एवैनं लोकेभ्यः शमयति तिस्र उत्तरा आहुतीर्जुहोति षट्सम्पद्यन्ते षड्वा ऋतव ऋतुभिरेवैनꣳ शमयति यदनुपरिक्रामं जुहुयादन्तरवचारिणꣳ रुद्रं कुर्यादथो खल्वाहुः कस्यां वाह दिशि रुद्रः कस्यां वेत्यनुपरिक्राममेव होतव्यमपरिवर्गमेवैनꣳ शमयत्येता वै देवताः सुवर्ग्या या उत्तमास्ता यजमानं वाचयति ताभिरेवैनꣳ सुवर्गं लोकं गमयति यं द्विष्यात्तस्य सञ्चरे पशूनां न्यस्येद्यः प्रथमः पशुरभितिष्ठति स आर्तिमार्च्छति ॥३॥

अश्मन्नूर्जमिति परि षिञ्चति मार्जयत्येवैनमथो तर्पयत्येव स एनं तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिँल्लोक उप तिष्ठते तृप्यति प्रजया पशुभिर्य एवं वेद तां न इषमूर्जं धत्त मरुतः सꣳरराणा इत्याहान्नं वा ऊर्गन्नम्मरुतोऽन्नमेवाव रुन्द्धेऽश्मꣳस्ते क्षुदमु ते शुगृच्छतु यं द्विष्म इत्याह

यमेव द्वेष्टि तमस्य क्षुधा च शुचा चार्पयति त्रिः परिषिञ्चन्पर्येति त्रिवृद्वा
अग्निर्यावानेवाग्निस्तस्य शुचँ शमयति त्रिः पुनः पर्येति षट्सम्पद्यन्ते
षड्वा ऋतव ऋतुभिरेवास्य शुचँ शमयत्यपां वा एतत्पुष्पं
यद्वेतसोऽपाँ शरोऽवका वेतसशाखया चावकाभिश्च वि कर्षत्यापो वै
शान्ताः शान्ताभिरेवास्य शुचँ शमयति यो वा अग्निं चितम्प्रथमः
पशुरधिक्रामतीश्वरो वै तँ शुचा प्रदहो मण्डूकेन वि कर्षत्येष वै
पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नारण्येषु तमेव
शुचार्पयत्यष्टाभिर्वि कर्षत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निर्तस्य
शुचँ शमयति पावकवतीभिरन्नं वै पावकोऽन्नेनैवास्य शुचँ शमयति
मृत्युर्वा एष यदग्निर्ब्रह्मण एतद्रूपं यत्कृष्णाजिनं कार्ष्णी उपानहावुप मुञ्चते
ब्रह्मणैव मृत्योरन्तर्धत्तेऽन्तर्मृत्योर्धत्तेऽन्तरन्नाद्यादित्याहुरन्यामुपमुञ्चतेऽन्यां
नान्तरेव मृत्योर्धत्तेऽवान्नाद्यँ रुन्द्धे नमस्ते हरसे शोचिष इत्याह
नमस्कृत्य हि वसीयाँसमुपचरन्त्यन्यं ते अस्मत्तपन्तु हेतय इत्याह
यमेव द्वेष्टि तमस्य शुचार्पयति पावको अस्मभ्यँ शिवो भवेत्याहान्नं वै
पावकोऽन्नमेवाव रुन्द्धे द्वाभ्यामधि क्रामति प्रतिष्ठित्या अपस्यवतीभ्याँ
शान्त्यै ॥४॥

नृषदे वडिति व्याघारयति पङ्क्त्याहुत्या यज्ञमुखमा रभतेऽक्ष्णया
व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै
यद्वषट्कुर्याद्यातयामास्य वषट्कारः स्याद्यन्न वषट्कुर्याद्रक्षाँसि यज्ञँ
हन्युर्वडित्याह परोऽक्षमेव वषट् करोति नास्य यातयामा वषट्कारो
भवति न यज्ञँ रक्षाँसि घ्नन्ति हुतादो वा अन्ये देवा अहुतादोऽन्ये
तानग्निचिदेवोभयान्प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति

हुतादश्चैव देवानहुतादश्च यजमानः प्रीणाति ते यजमानम्प्रीणन्ति दध्नैव हुतादः प्रीणाति मधुषाहुतादो ग्राम्यं वा एतदन्नं यद्दध्यारण्यम्मधु यद्दध्ना मधुमिश्रेणावोक्षत्युभयस्यावरुद्ध्यै ग्रुमुष्टिनावोक्षति प्राजापत्यो वै ग्रुमुष्टिः सयोनित्वाय द्वाभ्याम्प्रतिष्ठित्या अनुपरिचारमवोक्षत्यपरिवर्गमेवैनान्प्रीणाति वि वा एष प्राणैः प्रजया पशुभिर्ऋध्यते योऽग्निं चिन्वन्नधिक्रामति प्राणदा अपानदा इत्याह प्राणानेवात्मन्धत्ते वर्चोदा वरिवोदा इत्याह प्रजा वै वर्चः पशवो वरिवः प्रजामेव पशूनात्मन्धत्त इन्द्रो वृत्रमहन्तं वृत्रो हतः षोडशभिर्भोगैरसिनात्स एतामग्नयेऽनीकवत आहुतिमपश्यत्तामजुहोत्तस्याग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः षोडशधा वृत्रस्य भोगानप्यदहद्वैश्वकर्मणेन पाप्मनो निरमुच्यत यदग्नयेऽनीकवत आहुतिं जुहोत्यग्निरेवास्यानीकवान्त्स्वेन भागधेयेन प्रीतः पाप्मानमपि दहति वैश्वदर्मणेन पाप्मनो निर्मुच्यते यं कामयेत चिरम्पाप्मनो निर्मुच्येतेत्येकैकं तस्य जुहुयाच्चिरमेव पाप्मनो निर्मुच्यते यं कामयेत ताजक्पाप्मनो निर्मुच्येतेति सर्वाणि तस्यानुद्रुत्य जुहुयात्ताजगेव पाप्मनो निर्मुच्यतेऽथो खलु नानैव सूक्ताभ्यां जुहोति नानैव सूक्तयोर्वीर्यं दधात्यथो प्रतिष्ठित्यै ॥५॥

उदेनमुत्तरां नयेति समिध आ दधाति यथा जनं यतेऽवसं करोति तादृगेव त त्तिस्र आ दधाति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्मै भागधेयं करोत्यौ दुम्बरीर्भवन्त्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधात्यु दु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैरेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनँ समर्धयति पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्याह दिशो ह्येषोऽनु प्रच्यवतेऽपामतिं

दुर्मतिम्बाधमाना इत्याह रक्षसामपहत्यै रायस्पोषे
यज्ञपतिमाभजन्तीरित्याह पशवो वै रायस्पोषः पशूनेवाव रुन्द्धे
षड्भिर्हरति षड्वा ऋतव ऋतुभिरेवैनँ हरति द्वे परिगृह्यवती भवतो
रक्षसामपहत्यै सूर्यरश्मिर्हरिकेशः पुरस्तादित्याह प्रसूत्यै ततः पावका
आशिषो नो जुषन्तामित्याहान्नं वै पावकोऽन्नमेवाव रुन्द्धे देवासुराः
संयत्ता आसन्ते देवा एतदप्रतिरथमपश्यन्तेन वै ते
प्रत्यसुरानजयन्तदप्रतिरथस्याप्रतिरथत्वं यदप्रतिरथं द्वितीयो
होतान्वाहाप्रत्येव तेन यजमानो भ्रातृव्याञ्जयत्यथो अनभिजितमेवाभि
जयति दशर्चम्भवति दशाक्षरा विराड्विराजेमौ लोकौ
विधृतावनयोर्लोकयोर्विधृत्या अथो दशाक्षरा विराडन्नं
विराड्विराज्येवान्नाद्ये प्रति तिष्ठत्य संदिव वा
अन्तरिक्षमन्तरिक्षमिवाग्नीध्रमाग्नीध्रेऽश्मानं नि दधाति सत्त्वाय द्वाभ्यां
प्रतिष्ठित्यै विमान एष दिवो मध्य आस्त इत्याह व्येवैतया मिमीते मध्ये
दिवो निहितः पृश्निरश्मेत्याहान्नं वै पृश्न्यन्नमेवाव रुन्द्धे चतसृभिरा
पुच्छादेति चत्वारि च्छन्दाँसि च्छन्दोभिरेवे न्द्रं विश्वा अवीवृधन्नित्याह
वृद्धिमेवोपावर्तते वाजानाँ सत्पतिम्पतिमित्याहान्नं वै वाजोऽन्नमेवाव
रुन्द्धे सुम्नहूर्यज्ञो देवाँ आ च वक्षदित्याह प्रजा वै पशवः सुम्नम्प्रजामेव
पशूनात्मन्धत्ते यक्षदग्निर्देवो देवाँ आ च वक्षदित्याह स्वगाकृत्यै
वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदित्याहासौ वा आदित्य उद्यन्नुद्ग्राभ
एष निम्रोचन्निग्राभो ब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यं नि गृह्णाति
॥६॥

प्राचीमनु प्रदिशम्प्रेहि विद्वानित्याह देवलोकमेवैतयोपावर्तते

क्रमध्वमग्निना नाकमित्याहेमानेवैतया लोकान्क्रमते पृथिव्या अहमुदन्तरिक्षमारुहमित्याहेमानेवैतया लोकान्त्समारोहति सुवर्यन्तो नापेक्षन्त इत्याह सुवर्गमेवैतया लोकमेत्य ग्ने प्रेहि प्रथमो देवयतामित्याहोभयेष्वेवैतया देवमनुष्येषु चक्षुर्दधाति पञ्चभिरधि क्रामति पाङ्क्तो यज्ञो यावानेव यज्ञस्तेन सह सुवर्गं लोकमेति नक्तोषासेति पुरोऽनुवाक्यामन्वाह प्रत्त्या अग्ने सहस्राक्षेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै तस्मै ते विधेम वाजाय स्वाहेत्याहान्नं वै वाजोऽन्नमेवाव रुन्द्धे दध्नः पूर्णामौदुम्बरीꣳ स्वयमातृण्णायां जुहोत्यूर्ग्वै दध्यूर्गुदुम्बरोऽसौ स्वयमातृण्णामुष्यामेवोर्जं दधाति तस्मादमुतोऽर्वाचीमूर्जमुप जीवाम स्तिसृभिः सादयति त्रिवृद्वा अग्निर्यावानेवाग्निस्तम्प्रतिष्ठां गमयति प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीमा दधात्येषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्र हरति स्तृत्या अच्छम्बट्कारं विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीमा दधाति भा एवाव रुन्द्धे ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीꣳ शान्त्या अग्निर्वा ह वा अग्निचितं दुहेऽग्निचिद्वाग्निं दुहे ताꣳ सवितुर्वरेण्यस्य चित्रामित्याहैष वा अग्नेर्दोह स्तमस्य कण्व एव श्रायसोऽवेत्तेन ह स्मैनꣳ स दुहे यदेतया समिधमादधात्यग्निचिदेव तदग्निं दुहे सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह सप्तैवास्य साप्तानि प्रीणाति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्या अग्निर्देवेभ्यो निलायत स दिशोऽनु प्राविशज्जुह्वन्मनसा दिशो ध्यायेद्दिग्भ्य एवैनमव रुन्द्धे दध्ना पुरस्ताज्जुहोत्याज्येनोपरिष्टात्तेजश्चैवास्मा इन्द्रियं च समीची दधाति

द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः
संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्द्धे
यत्प्रयाजानूयाजान्कुर्याद्विकस्तिः सा यज्ञस्य दर्विहोमं करोति यज्ञस्य
प्रतिष्ठित्यै राष्ट्रं वै वैश्वानरो विरामरुतो वैश्वानरँ हुत्वा मारुताञ्जुहोति राष्ट्र
एव विशमनु बध्नात्यु च्चैर्वैश्वानरस्या श्रावयत्युपाँशु मारुताञ्जुहोति
तस्माद्राष्ट्रं विशमति वदति मारुता भवन्ति मरुतो वै देवानां विशो
देवविशेनैवास्मै मनुष्यविशमव रुन्द्धे सप्त भवन्ति सप्तगणा वै मरुतो
गणश एव विशमव रुन्द्धे गणेन गणमनुद्रुत्य जुहोति विशमेवास्मा
अनुवर्त्मानं करोति ॥७॥

वसोर्धारां जुहोति वसोर्मे धारासदिति वा एषा हूयते घृतस्य वा एनमेषा
धारामुष्मिँल्लोके पिन्वमानोप तिष्ठत आज्येन जुहोति
तेजो वा आज्यं तेजो वसोर्धारा तेजसैवास्मै तेजोऽव रुन्द्धेऽथो कामा वै
वसोर्धारा कामानेवाव रुन्द्धे यं कामयेत प्राणानस्यान्नाद्यं वि
च्छिन्द्यामिति विग्राहं तस्य जुहुयात्प्राणानेवास्यान्नाद्यं वि च्छिनत्ति यं
कामयेत प्राणानस्यान्नाद्यँ सं तनुयामिति संततां तस्य
जुहुयात्प्राणानेवास्यान्नाद्यँ सं तनोति द्वादश द्वादशानि जुहोति द्वादश
मासाः संवत्सरः संवत्सरेणैवास्मा अन्नमव रुन्द्धेऽन्नं च मेऽक्षुच्च म
इत्याहैतद्वा अन्नस्य रूपँ रूपेणैवान्नमव रुन्द्धेऽग्निश्च म आपश्च म
इत्याहैषा वा अन्नस्य योनिः सयोन्येवान्नमव रुन्द्धेऽर्धेन्द्राणि जुहोति देवता
एवाव रुन्द्धे यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानाम्भूयिष्ठभाक्तम
इंद्रमुत्तरमाहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधाति यज्ञायुधानि जुहोति यज्ञो वै
यज्ञायुधानि यज्ञमेवाव रुन्द्धेऽथो एतद्वै यज्ञस्य रूपँ रूपेणैव यज्ञमव

रुन्द्धेऽवभृथश्च मे स्वगाकारश्च म इत्याह स्वगाकृत्या अग्निश्च मे घर्मश्च म इत्याहैतद्वै ब्रह्मवर्चसस्य रूपꣳ रूपेणैव ब्रह्मवर्चसमव रुन्द्ध ऋक्च मे साम च म इत्याहैतद्वै छन्दसाꣳ रूपꣳ रूपेणैव च्छन्दाꣳस्यव रुन्द्धे गर्भाश्च मे वत्साश्च म इत्याहैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्द्धे कल्पाञ्जुहोत्यक्लृप्तस्य क्लृप्त्यै युग्मदयुजे जुहोति मिथुनत्वायो त्तरावती भवतोऽभिक्रान्त्या एका च मे तिस्रश्च म इत्याह देवच्छन्दसं वा एका च तिस्रश्च मनुष्यच्छन्दसं चतस्रश्चाष्टौ च देवच्छन्दसं चैव मनुष्यच्छन्दसं चाव रुन्द्ध आ त्रयस्त्रिꣳशतो जुहोति त्रयस्त्रिꣳशद्वै देवता देवता एवाव रुन्द्ध आष्टाचत्वारिꣳशतो जुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्द्धे वाजश्च प्रसवश्चेति द्वादशं जुहोति द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति ॥८॥

अग्निर्देवेभ्योऽपाक्रामद्भागधेयमिच्छमानस्तं देवा अब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै मह्यमेव वाजप्रसवीयं जुहवन्निति तस्मादग्नये वाजप्रसवीयं जुह्वति यद्वाजप्रसवीयं जुहोत्यग्निमेव तद्भागधेयेन समर्धयत्यथो अभिषेक एवास्य स चतुर्दशभिर्जुहोति सप्त ग्राम्या ओषधयः सप्तारण्या उभयीषामवरुद्ध्या अन्नस्यान्नस्य जुहोत्यन्नस्यान्नस्यावरुद्ध्या औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर ऊर्गन्नमूर्जैवास्मा ऊर्जमन्नमव रुन्द्धेऽग्निर्वै देवानामभिषिक्तोऽग्निचिन्मनुष्याणां तस्मादग्निचिद्वर्षति न धावे दवरुद्धꣳ ह्यस्यान्नमन्नमिव खलु वै वर्षं यद्धावेदन्नाद्याद्धावेदुपावर्तेतान्नाद्यमेवाभि उपावर्तते नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा जुहोत्यह्नैवास्मै रात्रिं

प्र दापयति रात्रियाहरहोरात्रे एवास्मै प्रत्ते काममन्नाद्यं दुहाते राष्ट्रभृतो जुहोति राष्ट्रमेवाव रुन्द्धे षड्भिर्जुहोति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति वज्रो वै रथो वज्रेणैव दिशोऽभि जयत्य ग्निचितꣳह वा अमुष्मिँल्लोके वातोऽभि पवते वातनामानि जुहोत्यभ्यैवैनममुष्मिँल्लोके वातः पवते त्रीणि जुहोति त्रय इमे लोका एभ्य एव लोकेभ्यो वातमव रुन्द्धे समुद्रोऽसि नभस्वानित्याहैतद्वै वातस्य रूपꣳ रूपेणैव वातमव रुन्द्धेऽञ्जलिना जुहोति न ह्येतेषामन्यथाहुतिरवकल्पते ॥९॥

सुवर्गाय वै लोकाय देवरथो युज्यते यत्राकूताय मनुष्यरथ एष खलु वै दैवरथो यदग्नि रग्निं युनज्मि शवसा घृतेनेत्याह युनक्त्येवैनꣳ स एनं युक्तः सुवर्गं लोकमभि वहति यत्सर्वाभिः पञ्चभिर्युञ्ज्याद्युक्तोऽस्याग्निः प्रच्युतः स्यादप्रतिष्ठिता आहुतयः स्युरप्रतिष्ठिताः स्तोमा अप्रतिष्ठितान्युक्थानि तिसृभिः प्रातःसवनेऽभि मृशति त्रिवृद्वा अग्निर्यावानेवाग्निस्तं युनक्ति यथानसि युक्त आधीयत एवमेव तत्प्रत्याहुतयस्तिष्ठन्ति प्रति स्तोमाः प्रत्युक्थानि यज्ञायज्ञियस्य स्तोत्रे द्वाभ्यामभि मृशत्येतावान्वै यज्ञो यावानग्निष्टोमो भूमा त्वा अस्यात ऊर्ध्वः क्रियते यावानेव यज्ञस्तमंततोऽन्वारोहति द्वाभ्याम्प्रतिष्ठित्या एकयाप्रस्तुतम्भवत्यथाभि मृशत्युपैनमुत्तरो यज्ञो नमत्यथो संतत्यै प्र वा एषोऽस्माँल्लोकाच्च्यवते योऽग्निं चिनुते न वा एतस्यानिष्टक आहुतिरव कल्पते यां वा एषोऽनिष्टक आहुतिं जुहोति स्रवति वै सा ताꣳ स्रवन्तीं यज्ञोऽनु परा भवति यज्ञं यजमानो यत्पुनश्चितिं चिनुत आहुतीनाम्प्रतिष्ठित्यै प्रत्याहुतयस्तिष्ठन्ति न यज्ञः पराभवति न

यजमानोऽष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रेणैवैनं छन्दसा चिनुते यदेकादश त्रैष्टुभेन यद्द्वादश जागतेन च्छन्दोभिरेवैनं चिनुते नपात्को वै नामैषोऽग्निर्यत्पुनश्चितिर्य एवं विद्वान्पुनश्चितिं चिनुत आ तृतीयात्पुरुषादन्नमत्ति

यथा वै पुनराधेय एवम्पुनश्चितिर्योऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमा धत्ते योऽग्निं चित्वा नर्ध्नोति स पुनश्चितिं चिनुते यत्पुनश्चितिं चिनुत ऋद्ध्या अथो खल्वाहुर्न चेतव्येति रुद्रो वा एष यदग्निर्यथा व्याघ्रꣳ सुप्तम्बोधयति तादृगेव तदथो खल्वाहुश्चेतव्येति यथा वसीयाꣳसम्भागधेयेन बोधयति तादृगेव तन्मनुरग्निमचिनुत तेन नार्ध्नोत्स एताम्पुनश्चितिमपश्यत्तामचिनुत तया वै स आर्ध्नोद्यत्पुनश्चितिं चिनुत ऋद्ध्यै ॥१०॥

छन्दश्चितं चिन्वीत पशुकामः पशवो वै छन्दाꣳसि पशुमानेव भवति श्येनचितं चिन्वीत सुवर्गकामः श्येनो वै वयसाम्पतिष्ठः श्येन एव भूत्वा सुवर्गं लोकम्पतति कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिँल्लोके स्यामिति शीर्षण्वानेवामुष्मिँल्लोके भवत्यलजचितं चिन्वीत चतुःसीतम्प्रतिष्ठाकामश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति प्रउगचितं चिन्वीत भ्रातृव्यवान्प्रैव भ्रातृव्यान्नुदत उभयतः प्रउगं चिन्वीत यः कामयेत प्रजातान्भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानिति प्रैव जातान्भ्रातृव्यान्नुदते प्रति जनिष्यमाणान्रथचक्रचितं चिन्वीत भ्रातृव्यवान्वज्रो वै रथो वज्रमेव भ्रातृव्येभ्यः प्र हरति द्रोणचितं चिन्वीतान्नकामो द्रोणे वा अन्नम्भ्रियते सयोन्येवान्नमव रुन्द्धे समूह्यं चिन्वीत पशुकामः पशुमानेव भवति परिचाय्यं चिन्वीत ग्रामकामो ग्राम्येव भवति श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति

पितृलो॒क ए॒वर्ध्नो॑ति विश्वामित्रजमद॒ग्नी वसि॑ष्ठेनास्पर्धेता॒ँ स ए॒ता
ज॒मद॑ग्निर्वि॒हव्या॑ अपश्य॒त्ता उपा॑धत्त॒ ताभि॒र्वै स वसि॑ष्ठस्येन्द्रि॒यं
वी॒र्य॑मवृङ्क्त यद्वि॑ह॒व्या॑ उप॒दधा॑तीन्द्रि॒यमे॒व ताभि॑र्वी॒र्यं॑ यज॑मानो॒ भ्रातृ॑व्यस्य
वृङ्क्ते॒ होतु॒र्धिष्णि॑य॒ उप॑ दधाति यजमानायत॒नं वै होता॒ स्व ए॒वास्मा॑
आ॒यत॑न इन्द्रि॒यं वी॒र्य॑मव॑ रुन्द्धे द्वाद॒शोप॑ दधाति॒ द्वाद॑शाक्षरा॒ जग॑ती॒
जाग॑ताः प॒शवो॒ जग॑त्यै॒वास्मै॑ प॒शूनव॑ रुन्द्धेऽष्टाव॑ष्टाव॒न्येषु॒ धिष्णि॑ये॒षूप॑
दधात्य॒ष्टाश॑फाः प॒शव॑ः प॒शूने॒वाव॑ रुन्द्धे षण्मा॑र्जा॒लीये॒ षड्वा ऋ॒तव॑
ऋ॒तव॒ः खलु॒ वै दे॒वाः पि॒तर॑ ऋ॒तूने॒व दे॒वान्पि॒तॄन्प्री॑णाति ॥११॥

पव॑स्व॒ वाज॑सातय॒ इत्य॑नु॒ष्टुक्प्र॑ति॒पद्भ॑वति ति॒स्रो॑ऽनु॒ष्टुभ॒श्चत॑स्रो गाय॒त्रियो॒
यत्ति॒स्रो॑ऽनु॒ष्टुभ॒स्तस्मा॒दश्व॑स्त्रि॒भिस्तिष्ठ॒ँस्तिष्ठति॒ यच्चत॑स्रो
गाय॒त्रिय॒स्तस्मा॒त्सर्वा॒ँश्चतु॒रः प॒दः प्र॑ति॒दध॒त्पला॑यते प॒रमा वा ए॒षा
छन्द॑सां॒ यद॑नु॒ष्टुक्प॑र॒मश्च॑तुष्टो॒मः स्तोमा॑नां प॒रमस्त्रि॑रा॒त्रो य॒ज्ञानां॑ प॒रमोऽश्व॑ः
पशू॒नां प॑र॒मेणै॒वैन॒म्पर॒मतां॑ गमयत्ये॒कवि॒ँशमह॑र्भवति॒ यस्मि॒न्नश्व॑
आल॒भ्यते॒ द्वाद॑श॒ मासा॒ः पञ्च॒र्तव॒स्त्रय॑ इ॒मे लो॒का अ॒सावा॑दि॒त्य
ए॑कवि॒ँश ए॒ष प्र॒जाप॑तिः प्राजाप॒त्योऽश्व॒स्तमे॒व सा॒क्षादृ॑ध्नोति॒ शक्व॑रयः
पृ॒ष्ठम्भ॑वन्त्य॒न्यद॑न्य॒च्छन्दो॒ऽन्यैन्ये॒ वा ए॒ते प॒शव॒ आ ल॑भ्यन्त उ॒तेव॑ ग्रा॒म्या
उ॒तेवा॑र॒ण्या यच्छक्व॑रयः पृ॒ष्ठम्भव॒न्त्यश्व॑स्य सर्व॒त्वाय॑
पार्थु॒रश्मम्ब्र॑ह्मसा॒मम्भ॑वति र॒श्मिना॒ वा अश्वो॒ य॒त ईश्व॒रो वा
अश्वोऽय॒तोऽप्र॑तिष्ठित॒ः परा॑म्परा॒वतं॒ गन्तो॒र्यत्पा॑र्थु॒रश्मम्ब्र॑ह्मसा॒मम्भव॒त्यश्व॑स्य॒
यत्यै॒ धृत्यै॒ संकृ॑त्यच्छावाकसा॒मम्भ॑वत्युत्सन्नय॒ज्ञो वा ए॒ष यद॑श्वमे॒धः
कस्तद्वे॑देत्या॑हु॒र्यदि॒ सर्वो॑ वा क्रि॒यते॒ न वा॒ सर्व॒ इति॒
संकृ॑त्यच्छावाकसा॒मम्भव॒त्यश्व॑स्य सर्व॒त्वाय॒ पर्या॑प्त्या॒ अन॑न्तरायाय॒

सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति ॥१२॥

इति पञ्चमकाण्डे चतुर्थः प्रपाठकः ४

अथ पञ्चमकाण्डे पञ्चमः प्रपाठकः ५

यदेकेन सँस्थापयति यज्ञस्य संतत्या अविच्छेदायैन्द्राः पशवो ये मुष्करा यदैन्द्राः सन्तोऽग्निभ्य आ लभ्यन्ते देवताभ्यः समदं दधात्याग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्याद्यदाग्नेयीस्तेनाग्नेया यत्त्रिष्टुभस्तेनैन्द्राः समृद्ध्यै न देवताभ्यः समदं दधाति वायवे नियुत्वते तूपरमा लभते तेजोऽग्नेर्वायुस्तेजस एष आ लभ्यते तस्माद्यद्रियङ्वायुर्वाति तद्रियङ्ङग्निर्दहति स्वमेव तत्तेजोऽन्वेति यन्न नियुत्वते स्यादुन्माद्येद्यजमानो नियुत्वते भवति यजमानस्यानुन्मादाय वायुमती श्वेतवती याज्यानुवाक्ये भवतः सतेजस्त्वाय हिरण्यगर्भः समवर्तताग्र इत्याघारमा घारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय सर्वाणि वा एष रूपाणि पशूनाम्प्रत्या लभ्यते यच्छ्मश्रुणस्तत्पुरुषाणाँ रूपं यत्तूपरस्तदश्वानां यदन्यतोदन्तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानां वायुर्वै पशूनाम्प्रियं धाम यद्वायव्यो भवत्येतमेवैनमभि संजानानाः पशव उप तिष्ठन्ते वायव्यः कार्या३ः प्राजापत्या३ इत्याहुर्यद्वायव्यं कुर्यात्प्रजापतेरियाद्यत्प्राजापत्यं कुर्याद्वायोरियाद्यद्वायव्यः पशुर्भवति तेन वायोर्नैति यत्प्राजापत्यः पुरोडाशो भवति तेन प्रजापतेर्नैति यद्द्वादशकपालस्तेन वैश्वानरान्नैत्याग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चा रभतेऽग्निरवमो देवतानां

विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यजमानोऽव रुन्द्धे पुरोडाशेन वै देवा अमुष्मिँल्लोक आर्ध्नुवञ्चरुणास्मिन्यः कामयेतामुष्मिँल्लोक ऋध्नुयामिति स पुरोडाशं कुर्वीतामुष्मिन्नेव लोक ऋध्नोति यदष्टाकपालस्तेनाग्नेयो यत्त्रिकपालस्तेन वैष्णवः समृद्ध्यै यः कामयेतास्मिँल्लोक ऋध्नुयामिति स चरुं कुर्वीताग्नेर्घृतं विष्णोस्तण्डुलास्तस्माच्चरुः कार्योऽस्मिन्नेव लोक ऋध्नोत्या दित्यो भवतीयं वा अदितिरस्यामेव प्रति तिष्ठत्यथो अस्यामेवाधि यज्ञं तनुते यो वै संवत्सरमुख्यमभृत्वाग्निं चिनुते यथा सामि गर्भोऽवपद्यते तादृगेव तदार्तिमार्च्छेद्वैश्वानरं द्वादशकपालम्पुरस्तान्निर्वपेत्संवत्सरो वा अग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा काल आगते विजायत एवमेव संवत्सरमाप्त्वा काल आगतेऽग्निं चिनुते नार्तिमार्च्छत्ये षा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्य तनुवमव रुन्द्धे त्रीण्येतानि हवीँषि भवन्ति त्रय इमे लोका एषां लोकानाँ रोहाय ॥१॥

प्रजापतिः प्रजाः सृष्ट्वा प्रेणानु प्राविशत्ताभ्यः पुनः सम्भवितुं नाशक्नोत्सोऽब्रवीदृध्नवदित्स यो मेऽतः पुनः संचिनवदिति तं देवाः समचिन्वन्ततो वै त आर्ध्नुवन्यत्समचिन्वन्तच्चित्यस्य चित्यत्वं य एवं विद्वानग्निं चिनुत ऋध्नोत्येव कस्मै कमग्निश्चीयत इत्याहुरग्निवानसानीति वा अग्निश्चीयतेऽग्निवानेव भवति कस्मै कमग्निश्चीयत इत्याहुर्देवा मा वेदन्निति वा अग्निश्चीयते विदुरेनं देवाः कस्मै कमग्निश्चीयत इत्याहुर्गृह्यसानीति वा अग्निश्चीयते गृह्येव भवति कस्मै कमग्निश्चीयत इत्याहुः पशुमानसानीति वा अग्निश्चीयते पशुमानेव भवति कस्मै

कम॒ग्निश्ची॑यत॒ इत्या॑हुः स॒प्त मा॒ पुरु॑षा॒ उप॑ जीवा॒निति॒ वा अ॒ग्निश्ची॑यते॒ त्रय॒ः
प्राञ्च॒स्त्रय॑ः प्र॒त्यञ्च॑ आ॒त्मा स॑प्त॒म ए॒ताव॑न्त ए॒वैन॑म॒मुष्मि॑ँल्लो॒क उप॑
जीवन्ति प्र॒जाप॑तिर॒ग्निम॑चिकीषत॒ तम्पृ॑थि॒व्य॑ब्रवी॒न्न मय्य॒ग्निं चे॑ष्य॒सेति॑ मा
धक्ष्यति॒ सा त्वा॑तिद॒ह्यमा॑ना॒ वि ध॑विष्ये॒ स पापी॑यान्भविष्य॒सीति॒
सो॑ऽब्रवी॒त्तथा॒ वा अ॒हं क॑रिष्यामि॒ यथा॑ त्वा॒ नाति॑ध॒क्ष्यतीति॒ स
इ॒माम॒भ्य॑मृशत्प्रजाप॑तिस्त्वा सादयतु॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा
सी॒दे॒तीमाम॒वेष्ट॑कां कृ॒त्वोपा॑ध॒त्तान॑तिदाहाय॒ यत्प्रत्य॒ग्निं चि॑न्वी॒त तद॒भि
मृ॑शेत्प्र॒जाप॑तिस्त्वा सादयतु॒ तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा
सी॒दे॒तीमाम॒वेष्ट॑कां कृ॒त्वोप॑ ध॒त्तेऽन॑तिदाहाय प्र॒जाप॑तिरकामयत॒ प्र
जा॑ये॒येति॒ स ए॒तमु॒ख्य॑मपश्य॒त्तꣳ सं॑वत्स॒रम॑बिभ॒स्ततो॒ वै स प्राजा॑यत॒
तस्मा॑त्संवत्स॒रम्भा॒र्य॑ः प्रैव जा॑यते॒ तं वस॑वोऽब्रु॒वन्प्र त्वम॑जनिष्ठा व॒यम्प्र
जा॑यामहा॒ इति॒ तं वसु॑भ्य॒ः प्राय॑च्छ॒त्तं त्रीण्यहा॑न्यबिभरु॒स्तेन॒ त्रीणि॑ च
श॒तान्यसृ॑जन्त॒ त्रय॑स्त्रिꣳशतं च॒ तस्मा॑त्र्य॒हम्भा॒र्य॑ः प्रैव जा॑यते॒
तान्रु॒द्रा अ॑ब्रुव॒न्प्र यू॒यम॑जनिढ्वं व॒यम्प्र जा॑यामहा॒ इति॒ तꣳ रु॒द्रेभ्य॒ः
प्राय॑च्छन्तꣳ षडहा॑न्यबिभरु॒स्तेन॒ त्रीणि॑ च श॒तान्यसृ॑जन्त॒ त्रय॑स्त्रिꣳशतं च॒
तस्मा॑त्षड॒हम्भा॒र्य॑ः प्रैव जा॑यते॒ ताना॑दि॒त्या अ॑ब्रुव॒न्प्र यू॒यम॑जनिढ्वं व॒यं प्र
जा॑यामहा॒ इति॒ तमा॑दि॒त्येभ्य॒ः प्राय॑च्छ॒न्तं द्वाद॒शाहा॑न्यबिभरु॒स्तेन॒ त्रीणि॑ च
श॒तान्यसृ॑जन्त॒ त्रय॑स्त्रिꣳशतं च॒ तस्मा॑द्द्वादश॒ाहम्भा॒र्य॑ः प्रैव जा॑यते॒ तेन॒ वै
ते स॒हस्र॑मसृजन्तो॒खाꣳ स॑हस्र॒तमीं य ए॒वमु॒ख्य॑ꣳ साह॒स्रं वेद॒ प्र
स॒हस्र॑म्प॒शूना॑प्नोति ॥२॥

यजु॑षा॒ वा ए॒षा क्रि॑यते॒ यजु॑षा पच्यते॒ यजु॑षा॒ वि मु॑च्यते॒ यद॒ुखा सा वा
ए॒षैतर्हि॑ या॒तया॑म्नी॒ सा न पुन॑ः प्र॒युज्येत्या॑हु॒रग्ने॑ यु॒क्ष्वा हि ये तव॑ यु॒क्ष्वा

हि देवहूतमाँ इत्युखायां जुहोति तेनैवैनाम्पुनः प्र युङ्क्ते तेनायातयाम्नी यो वा अग्निं योग आगते युनक्ति युङ्क्ते युञ्जानेष्वग्ने युक्त्वा हि ये तव युक्त्वा हि देवहूतमा इत्याहैष वा अग्नेर्योगस्तेनैवैनं युनक्ति युङ्क्ते युञ्जानेषु ब्रह्मवादिनो वदन्ति न्यङ्ङग्निश्चेतव्या३ उत्ताना३ इति वयसां वा एष प्रतिमया चीयते यदग्निर्यन्न्यञ्चं चिनुयात्पृष्टित एनमाहुतय ऋच्छेयुर्यदुत्तानं न पतितुँ शक्नुयादसुवर्ग्योऽस्य स्यात्प्राचीनमुत्तानं पुरुषशीर्षमुप दधाति मुखत एवैनमाहुतय ऋच्छन्ति नोत्तानं चिनुते सुवर्ग्योऽस्य भवति सौर्या जुहोति चक्षुरेवास्मिन्प्रति दधाति द्विर्जुहोति द्वे हि चक्षुषी समान्या जुहोति समानँ हि चक्षुः समृद्ध्यै देवासुराः संयत्ता आसन्ते वामं वसु सं न्यदधत तद्देवा वामभृतावृञ्जत तद्वामभृतो वामभृत्त्वं यद्वामभृतमुपदधाति वाममेव तया वसु यजमानो भ्रातृव्यस्य वृङ्क्ते हिरण्यमूर्ध्नी भवति ज्योतिर्वै हिरण्यं ज्योतिर्वामं ज्योतिषैवास्य ज्योतिर्वामं वृङ्क्ते द्वियजुर्भवति प्रतिष्ठित्यै ॥३॥

आपो वरुणस्य पत्नय आसन्ता अग्निरभ्यध्यायत्ताः समभवत्तस्य रेतः परापतत्तदियमभवद्यद्द्वितीयम्परापतत्तदसावभवदियं वै विराडसौ स्वराड्यद्विराजावुपदधातीमे एवोप धत्ते यद्वा असौ रेतः सिञ्चति तदस्याम्प्रति तिष्ठति तत्प्र जायते ता ओषधयो वीरुधो भवन्ति ता अग्निरत्ति य एवं वेद प्रैव जायतेऽन्नादो भवति यो रेतस्वी स्यात्प्रथमायां तस्य चित्यामुभे उप दध्यादिमे एवास्मै समीची रेतः सिञ्चतो यः सिक्तरेताः स्यात्प्रथमायां तस्य चित्यामन्यामुप दध्यादुत्तमायामन्याँ रेत एवास्य सिक्तमाभ्यामुभयतः परि गृह्णाति संवत्सरं न कञ्चन प्रत्यवरोहेन्न हीमे कं चन प्रत्यवरोहतस्तदेनयोर्व्रतं यो वा अपशीर्षाणमग्निं

चिनुतेऽपशीर्षामुष्मिँल्लोके भवति यः सशीर्षाणं चिनुते सशीर्षामुष्मिँल्लोके भवति चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीतिहौत्रा ऋतावृधः समुद्रस्य वयुनस्य पत्मञ्जुहोमि विश्वकर्मणे विश्वाहामर्त्यँ हविरिति स्वयमातृणामुपधाय जुहोत्येतद्वा अग्नेः शिरः सशीर्षाणमेवाग्निं चिनुते सशीर्षामुष्मिँल्लोके भवति य एवं वेद सुवर्गाय वा एष लोकाय चीयते यदग्निस्तस्य यदयथापूर्वं क्रियतेऽसुवर्ग्यमस्य तत्सुवर्ग्योऽग्निश्चितिमुपधायाभि मृशेच्चित्तिमचित्तिं चिनवद्वि विद्वान्पृष्ठेव वीता वृजिना च मर्तान्राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्येति यथापूर्वमेवैनामुप धत्ते प्राञ्चमेनं चिनुते सुवर्ग्योऽस्य भवति ॥४॥

विश्वकर्मा दिशाम्पतिः स नः पशून्पातु सोऽस्मान्पातु तस्मै नमः प्रजापती रुद्रो वरुणोऽग्निर्दिशाम्पतिः स नः पशून्पातु सोऽस्मान्पातु तस्मै नम एता वै देवता एतेषाम्पशूनामधिपतयस्ताभ्यो वा एष आ वृश्चते यः पशुशीर्षाण्युपदधाति हिरण्येष्टका उप दधात्येताभ्य एव देवताभ्यो नमस्करोति ब्रह्मवादिनो वदन्त्यग्नौ ग्राम्यान्पशून्प्र दधाति शुचारण्यानर्पयति किं तत उच्छिँषतीति यद्धिरण्येष्टका उपदधात्यमृतं वै हिरण्यममृतेनैव ग्राम्येभ्यः पशुभ्यो भेषजं करोति नैनान्हिनस्ति प्राणो वै प्रथमा स्वयमातृण्णा व्यानो द्वितीयापानस्तृतीयानु प्राण्यात्प्रथमाँ स्वयमातृणामुपधाय प्राणेनैव प्राणँ समर्धयति व्यन्यादिद्वतीयामुपधाय व्यानेनैव व्यानँ समर्धयत्यपान्यात्तृतीयामुपधायापानेनैवापानँ समर्धयत्यथो प्राणैरेवैनँ समिन्द्धे भूर्भुवः सुवरिति स्वयमातृण्णा उप दधातीमे वै लोकाः स्वयमातृण्णा एताभिः खलु वै व्याहृतीभिः

प्रजापतिः प्राजायत यदेताभिर्व्याहृतीभिः स्वयमातृण्णा उपदधातीमानेव लोकानुपधायैषु लोकेष्वधि प्र जायते प्राणाय व्यानायापानाय वाचे त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीदाग्निना वै देवाः सुवर्गं लोकमजिगाꣳसन्तेन पतितुं नाशक्नुवन्त एताश्चतस्रः स्वयमातृण्णा अपश्यन्ता दिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन्यच्चतस्रः स्वयमातृण्णा दिक्षूपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानः सुवर्गं लोकमेति ॥५॥

अग्न आ याहि वीतय इत्याहाह्वतैवैनमग्निं दूतं वृणीमह इत्याह हुत्वैवैनं वृणीतेऽग्निनाग्निः समिध्यत इत्याह समिन्द्ध एवैनमग्निर्वृत्राणि जङ्घनदित्याह समिद्ध एवास्मिन्निन्द्रियं दधात्यग्नेः स्तोमम्मनामह इत्याह मनुत एवैनमेतानि वा अह्नाꣳ रूपाण्यन्वहमेवैनं चिनुतेऽवाह्नाꣳ रूपाणि रुन्द्धे ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयाम्नीरन्या इष्टका अयातयाम्नी लोकम्पृणेत्यैन्द्राग्नी हि बार्हस्पत्येति ब्रूयादिन्द्राग्नी च हि देवानाम्बृहस्पतिश्चायातयामानोऽनुचरवती भवत्यजामित्वायानुष्टुभानु चरत्यात्मा वै लोकम्पृणा प्राणोऽनुष्टुप्तस्मात्प्राणः सर्वाण्यङ्गान्यनु चरति ता अस्य सूददोहस इत्याह तस्मात्परुषिपरुषि रसः सोमꣳ श्रीणन्ति पृश्नय इत्याहान्नं वै पृश्न्यन्नमेवाव रुन्द्धेऽर्को वा अग्निरर्कोऽन्नमन्नमेवाव रुन्द्धे जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इत्याहेमानेवास्मै लोकाञ्ज्योतिष्मतः करोति यो वा इष्टकानाम्प्रतिष्ठां वेद प्रत्येव तिष्ठति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्याहैषा वा इष्टकानाम्प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति ॥६॥

सुवर्गाय वा एष लोकाय चीयते यदग्निर्वज्र एकादशिनी यदग्नावेकादशिनीम्मिनुयाद्वज्रेणैनꣳ सुवर्गाल्लोकादन्तर्दध्याद्यन्न मिनुयात्स्वरुभिः पशून्व्यर्धयेदेकयूपम्मिनोति नैनं वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून्व्यर्धयति वि वा एष इन्द्रियेण वीर्येणर्ध्यते योऽग्निं चिन्वन्नधि क्रामत्यैन्द्रियर्चा क्रमणम्प्रतीष्टकामुप दध्यान्नेन्द्रियेण वीर्येण व्यृध्यते रुद्रो वा एष यदग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्च्यनूची ताभ्यो वा एष आ वृश्चयते योऽग्निं चिनुतेऽग्निं चित्वा तिसृधन्वमयाचितम्ब्राह्मणाय दद्यात्ताभ्य एव नमस्करोत्यतिथो ताभ्य एवात्मानं निष्क्रीनीते यत्ते रुद्र पुरो धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि यत्ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र परिवत्सरेण नमस्करोमि यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदावत्सरेण नमस्करोमि यत्ते रुद्रोत्तराद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदुवत्सरेण नमस्करोमि यत्ते रुद्रोपरि धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र वत्सरेण नमस्करोमि रुद्रो वा एष यदग्निः स यथा व्याघ्रः क्रुद्धस्तिष्ठत्येवं वा एष एतर्हि संचितमेतैरुप तिष्ठते नमस्कारैरेवैनꣳ शमयति येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु ।
तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव ॥
आपं त्वाग्ने मनसापं त्वाग्ने तपसापं त्वाग्ने दीक्षयापं त्वाग्न उपसद्भि रापं त्वाग्ने सुत्ययापं त्वाग्ने दक्षिणाभिरापं त्वाग्नेऽवभृथेना पं त्वाग्ने वशयापं त्वाग्ने स्वगाकारेणे त्याहैषा वा अग्नेराप्तिस्तयैवैनमाप्नोति ॥७॥

गायत्रेण पुरस्तादुप तिष्ठते प्राणमेवास्मिन्दधाति बृहद्रथंतराभ्याम्पक्षावोज एवास्मिन्दधात्यृतुस्थायज्ञायज्ञियेन पुच्छमृतुष्वेव प्रति तिष्ठति पृष्ठैरुप

तिष्ठते तेजो वै पृष्ठानि तेज एवास्मिन्दधाति प्रजापतिरग्निमसृजत
सोऽस्मात्सृष्टः पराङैत्तं वारवन्तीयेनावारयत तद्वारवन्तीयस्य
वारवन्तीयत्वꣳ श्यैतेन श्येती अकुरुत तच्छ्यैतस्य श्यैतत्वं
यद्वारवन्तीयेनोपतिष्ठते वारयत एवैनꣳ श्यैतेन श्येती कुरुते
प्रजापतेर्हृदयेनापिपक्षम्प्रत्युप तिष्ठते प्रेमाणमेवास्य गच्छति प्राच्या त्वा
दिशा सादयामि गायत्रेण च्छन्दसाग्निना देवतयाग्नेः शीर्ष्णाग्नेः शिर उप
दधामि दक्षिणया त्वा दिशा सादयामि त्रैष्टुभेन च्छन्दसेन्द्रेण देवतयाग्नेः
पक्षेणाग्नेः पक्षमुप दधामि प्रतीच्या त्वा दिशा सादयामि जागतेन
च्छन्दसा सवित्रा देवतयाग्नेः पुच्छेनाग्नेः पुच्छमुप दधाम्युदीच्या त्वा
दिशा सादयाम्यानुष्टुभेन च्छन्दसा मित्रावरुणाभ्यां देवतयाग्नेः पक्षेणाग्नेः
पक्षमुप दधाम्यूर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन च्छन्दसा
बृहस्पतिना देवतयाग्नेः पृष्ठेनाग्नेः पृष्ठमुप दधामि यो वा अपात्मानमग्निं
चिनुतेऽपात्मामुष्मिँल्लोके भवति यः सात्मानं चिनुते सात्मामुष्मिँल्लोके
भवत्यात्मेष्टका उप दधात्येष वा अग्नेरात्मा सात्मानमेवाग्निं चिनुते
सात्मामुष्मिँल्लोके भवति य एवं वेद ॥८॥

अग्ने उदधे या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप
जीवन्तो भूयास्माग्ने दुध्र गह्य किꣳशिल वन्य या त इषुर्युवा नाम तया
नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्म पञ्च वा एतेऽग्नयो
यच्चितय उदधिरेव नाम प्रथमो दुध्रो द्वितीयो गह्यस्तृतीयः
किꣳशिलश्चतुर्थो वन्यः पञ्चमस्तेभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं
च प्र दहेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति
नार्तिमार्च्छत्यध्वर्युर्न यजमानो वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः

श्रोत्रम्बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूः तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसी रप वा एतस्मात्प्राणाः क्रामन्ति योऽग्निं चिन्वन्नधिक्रामति वाङ्म आसन्नसोः प्राण इत्याह प्राणानेवात्मन्धत्ते यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्त्वा हुतिभागा वा अन्ये रुद्रा हविर्भागा अन्ये शतरुद्रीयꣳ हुत्वा गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां नि दध्याद्भागधेयेनैवैनꣳ शमयति तस्य त्वै शतरुद्रीयꣳ हुतमित्याहुर्यस्यैतदग्नौ क्रियत इति वसवस्त्वा रुद्रैः पुरस्तात्पान्तु पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्वा दित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु न वा एतेन पूतो न मेध्यो न प्रोक्षितो यदेनमतः प्राचीनम्प्रोक्षति यत्संचितमाज्येन प्रोक्षति तेन पूतस्तेन मेध्यस्तेन प्रोक्षितः ॥९॥

समीची नामासि प्राची दिक्तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधाम्यो जस्विनी नामासि दक्षिणा दिक्तस्यास्त इन्द्रोऽधिपतिः पृदाकुः प्राची नामासि प्रतीची दिक्तस्यास्ते सोमोऽधिपतिः स्वजोऽवस्थावा नामास्युदीची दिक्तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजि रधिपत्नी नामासि बृहती दिक्तस्यास्ते बृहस्पतिरधिपतिः श्वित्रो वशिनी नामासीयं दिक्तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधाम्ये ता वै देवता अग्निं चितꣳ रक्षन्ति ताभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च ध्यायेयुर्यदेता

आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नार्तिमार्च्छत्यध्वर्युर्न यजमानो
हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवः सलिलो निलिम्पा नाम
स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवः सगरो वज्रिणो नाम स्थ तेषां
वः पश्चाद्गृहाः स्वप्नो व इषवो गह्वरोऽवस्थावानो नाम स्थ तेषां व
उत्तराद्गृहा आपो व इषवः समुद्रोऽधिपतयो नाम स्थ तेषां व उपरि गृहा
वर्षं व इषवोऽवस्वान्क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहा अन्नं व
इषवोऽनिमिषो वातनामं तेभ्यो वो नमस्ते नो मृडयत
ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि हुतादो वा अन्ये देवा
अहुतादोऽन्ये तानग्निचिदेवोभयान्प्रीणाति दध्ना मधुमिश्रेणैता
आहुतीर्जुहोति भागधेयेनैवैनान्प्रीणात्यथो खल्वाहुरिष्टका वै देवा
अहुताद इत्यनुपरिक्रामं जुहोत्यपरिवर्गमेवैनान्प्रीणाती म॑ँ स्तनमूर्जस्वन्तं
धयापाम्प्रप्यातमग्ने सरिरस्य मध्ये ।
उत्सं जुषस्व मधुमन्तमूर्व समुद्रिय॑ँ सदनमा विशस्व ॥
यो वा अग्निम्प्रयुज्य न विमुञ्चति यथाश्वो युक्तोऽविमुच्यमानः
क्षुध्यन्पराभवत्येवमस्याग्निः परा भवति तम्पराभवन्तं यजमानोऽनु परा
भवति सोऽग्निं चित्वा लूक्षो भवतीम॑ँ स्तनमूर्जस्वन्तं
धयापामित्याज्यस्य पूर्णा॑ँ स्रुचं जुहोत्येष वा अग्नेर्विमोको
विमुच्यैवास्मा अन्नमपि दधाति तस्मादाहुर्यश्चैवं वेद यश्च न सुधाय॑ँ ह
वै वाजी सुहितो दधातीत्यग्निर्वाव वाजी तमेव तत्प्रीणाति स एनम्प्रीतः
प्रीणाति वसीयान्भवति ॥१०॥

इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णो यमाय राज्ञ ऋश्य ऋषभाय राज्ञे
गवयः शार्दूलाय राज्ञे गौरः पुरुषराजाय मर्कटः क्षिप्रश्येनस्य वर्तिका

नीलङ्गोः क्रिमिः सोमस्य राज्ञः कुलुङ्गः सिन्धोः शिँशुमारो हिमवतो हस्ती ॥११॥

मयुः प्राजापत्य ऊलो हलीक्ष्णो वृषदँशस्ते धातुः सरस्वत्यै शारिः श्येता पुरुषवाक्सरस्वते शुकः श्येतः पुरुषवागारण्योऽजो नकुलः शका ते पौष्णा वाचे क्रौञ्चः ॥१२॥

अपां नप्त्रे जषो नाक्रो मकरः कुलीकयस्तेऽकूपारस्य वाचे पैङ्गराजो भगाय कुषीतक आती वाहसो दर्विदा ते वायव्या दिग्भ्यश्चक्रवाकः ॥१३॥

बलायाजगर आखुः सृजया शयण्डकस्ते मैत्रा मृत्यवेऽसितो मन्यवे स्वजः कुम्भीनसः पुष्करसादो लोहिताहिस्ते त्वाष्ट्राः प्रतिश्रुत्कायै वाहसः ॥१४॥

पुरुषमृगश्चन्द्रमसे गोधा कालका दार्वाघाटस्ते वनस्पतीनामेण्यह्ने कृष्णो रात्रियै पिकः क्ष्विङ्का नीलशीर्ष्णी तेऽर्यम्णे धातुः कत्कटः ॥१५॥

सौरी बलाकर्श्यो मयूरः श्येनस्ते गन्धर्वाणां वसूनां कपिञ्जलो रुद्राणां तित्तिरी रोहित्कुण्डृणाची गोलत्तिका ता अप्सरसामरण्याय सृमरः ॥१६॥

पृषतो वैश्वदेवः पित्वो न्यङ्कुः कशस्तेऽनुमत्या अन्यवापोऽर्धमासानां

मासां कश्यपः क्वयिः कुटरुर्दात्यौहस्ते सिनीवाल्यै बृहस्पतये शित्पुटः
॥१७॥

शका भौमी पान्त्रः कशो मान्थीलवस्ते पितृणा मृतूनां जहका
संवत्सराय लोपा कपोत उलूकः शशस्ते नैर्ऋताः
कृकवाकुः सावित्रः ॥१८॥

रुरू रौद्रः कृकलासः शकुनिः पिप्पका ते शरव्यायै
हरिणो मारुतो ब्रह्मणे शार्ग स्तरक्षुः कृष्णः श्वा चतुरक्षो गर्दभस्त
इतरजनाना मग्नये धूङ्क्षणा ॥१९॥

अलज आन्तरिक्ष उद्रो मद्गुः प्लवस्तेऽपा मदित्यै हँससाचि रिन्द्राण्यै
कीर्शा गृध्रः शितिकक्षी वार्ध्राणसस्ते दिव्या द्यावापृथिव्या श्वावित्
॥२०॥

सुपर्णः पार्जन्यो हँसो वृको वृषदँशस्त ऐन्द्रा
अपामुद्रोऽर्यम्णे लोपाशः सिँहो नकुलो व्याघ्रस्ते महेन्द्राय कामाय
परस्वान् ॥२१॥

आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः
शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष
ऐन्द्राग्नः सँहितोऽधोरामः सावित्रो वारुणः पेत्वः ॥२२॥

अश्वस्तूपरो गोमृगस्ते प्राजापत्या आग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्थौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरः सौर्यो बलक्षः पेत्वः ॥२३॥

अग्नयेऽनीकवते रोहिताञ्जिरनड्वा नधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती मेषी वारुणः कृष्ण एकशितिपात्पेत्वः ॥२४॥

इति पञ्चमकाण्डे पञ्चमः प्रपाठकः ५

अथ पञ्चमकाण्डे षष्ठः प्रपाठकः ६

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु ॥
यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु ॥
यासाꣳ देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवीम्पयसोऽन्दन्ति शुक्रास्ता न आपः शꣳ स्योना भवन्तु ॥
शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोऽप स्पृशत त्वचम्मे ।
सर्वाꣳ अग्नीꣳरप्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्त ॥
यददः सम्प्रयतीरहावनदता हते । तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः ॥
यत्प्रेषिता वरुणेन ताः शीभꣳ समवल्गत ।
तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु स्थन ॥
अपकामꣳ स्यन्दमाना अवीवरत वो हिकम् । इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्णाम वो हितम् ॥

एकों देवो अप्यंतिष्ठत्स्यन्दंमाना यथावशम् । उदांनिषुर्महीरिति
तस्मांदुदकमुंच्यते ॥
आपों भद्रा घृतमिदाप आसुरग्नीषोमौं बिभ्रत्याप इत्ताः । तीव्रो रसों
मधुपृचांमरंगम आ मां प्राणेनं सह वर्चसा गन् ॥
आदित्पंश्याम्युत वां शृणोम्या मा घोषों गच्छति वाङ्नं आसाम् । मन्यें
भेजानो अमृतंस्य तर्हि हिरंण्यवर्णा अतृंपं यदा वंः॥
आपो हि ष्ठा मंयोभुवस्ता नं ऊर्जे दंधातन । महे रणांय चक्षसे ॥
यो वंः शिवतंमो रसस्तस्यं भाजयतेह नंः । उशतीरिंव मातरंः ॥
तस्मा अरं गमाम वो यस्य क्षयांय जिन्वंथ । आपों जनयंथा च नः ॥
दिवि श्रंयस्वान्तरिंक्षे यतस्व पृथिव्या सम्भंव ब्रह्मवर्चसमंसि
ब्रह्मवर्चसायं त्वा ॥१॥

अपां ग्रहांन्गृह्णात्येतद्वाव राजसूयं यदेते ग्रहांः सवोंऽग्निर्वरुणसवो
रांजसूयमग्निसवश्चित्यस्ताभ्यांमेव सूयतेऽथों उभावेव लोकावभि जंयति
यश्चं राजसूयेनेजानस्य यश्चांग्निचित आपों भवन्त्यापो वा अग्नेर्भ्रातृंव्या
यदपोंऽग्नेरधस्तांदुपदधांति भ्रातृंव्याभिभूत्यै भवंत्यात्मना परांस्य भ्रातृंव्यो
भवत्यमृतं वा आपस्तस्मांदद्भिरवंतान्तमभि षिञ्चन्ति नार्तिमार्च्छति
सर्वमायुरेति यस्यैता उंपधीयन्ते य उं चैना एवं वेदा न्नं वा आपंः पशव
आपोऽन्नंम्पशवोंऽन्नादः पंशुमान्भंवति यस्यैता उंपदीयन्ते य उं चैना एवं
वेद द्वादंश भवन्ति द्वादंश मासांः संवत्सरः संवत्सरेणैवास्मा अन्नमवं
रुन्द्धे पात्रांणि भवन्ति पात्रे वा अन्नंमद्यते सयोंन्येवान्नमवं रुन्द्ध आ
द्वांदशात्पुरुंषादन्नंमत्त्यथो पात्रान्न च्छिंद्यते यस्यैता उंपधीयन्ते य उं चैना
एवं वेदं कुम्भाश्चं कुम्भीश्चं मिथुनानिं भवन्ति मिथुनस्य प्रजांत्यै प्र प्रजयां

पशुभिर्मिथुनैर्जायते यस्यैता उपधीयन्ते य उ चैना एवं वेद शुग्वा अग्निः सोऽध्वर्युं यजमानम्प्रजाः शुचार्पयति यदप उपदधाति शुचमेवास्य शमयति नार्तिमार्च्छत्यध्वर्युर्न यजमानः शाम्यन्ति प्रजा यत्रैता उपधीयन्तेऽपां वा एतानि हृदयानि यदेता आपो यदेता अप उपदधाति दिव्याभिरेवैनाः सꣳ सृजति वर्षुकः पर्जन्यो भवति यो वा एतासामायतनं क्लृप्तं वेदायतनवान्भवति कल्पतेऽस्मा अनुसीतमुप दधात्येतद्वा आसामायतनमेषा क्लृप्तिर्य एवं वेदायतनवान्भवति कल्पतेऽस्मै द्वंद्वमन्या उप दधाति चतस्रो मध्ये धृत्या अन्नं वा इष्टका एतत्खलु वै साक्षादन्नं यदेष चरुर्यदेतं चरुमुपदधाति साक्षादे वास्मा अन्नमव रुन्द्धे मध्यत उप दधाति मध्यत एवास्मा अन्नं दधाति तस्मान्मध्यतोऽन्नमद्यते बार्हस्पत्यो भवति ब्रह्म वै देवानाम्बृहस्पतिर्ब्रह्मणैवास्मा अन्नमव रुन्द्धे ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेत्याह तेजस्वी ब्रह्मवर्चसी भवति यस्यैष उपधीयते य उ चैनमेवं वेद ॥ २॥

भूतेष्टका उप दधात्यत्रात्र वै मृत्युर्जायते यत्रयत्रैव मृत्युर्जायते तत एवैनमव यजते तस्मादग्निचित्सर्वमायुरेति सर्वे ह्यस्य मृत्यवोऽवेष्टास्तस्मादग्निचिन्नाभिचरितवै प्रत्यगेनमभिचारः स्तृणुते सूयते वा एष योऽग्निं चिनुते देवसुवामेतानि हवीꣳषि भवन्त्येतावन्तो वै देवानाꣳ सवास्त एवास्मै सवान्प्र यच्छन्ति त एनꣳ सुवन्ते सवोऽग्निर्वरुणसवो राजसूयम्ब्रह्मसवश्चित्यो देवस्य त्वा सवितुः प्रसव इत्याह सवितृप्रसूत एवैनम्ब्रह्मणा देवताभिरभि षिञ्चत्यन्नस्यान्नस्याभि षिञ्चत्यन्नस्यान्नस्यावरुद्ध्यै पुरस्तात्प्रत्यञ्चमभि षिञ्चति पुरस्ताद्धि

प्रतीचीनमन्नमद्यते शीर्षतोऽभि षिञ्चति शीर्षतो ह्यन्नमद्यत आ
मुखादन्ववस्रावयति मुखत एवास्मा अन्नाद्यं दधात्यग्नेस्त्वा
साम्राज्येनाभि षिञ्चामीत्याहैष वा अग्नेः सवस्तेनैवैनमभि षिञ्चति
बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामीत्याह ब्रह्म वै
देवानाम्बृहस्पतिर्ब्रह्मणैवैनमभि षिञ्चतीन्द्रस्य त्वा साम्राज्येनाभि
षिञ्चामीत्याहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधात्येतद्वै राजसूयस्य रूपं य एवं
विद्वानग्निं चिनुत उभावेव लोकावभि जयति यश्च राजसूयेनेजानस्य
यश्चाग्निचित इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यम्परापतत्तद्देवाः
सौत्रामण्या समभरन्सूयते वा एष योऽग्निं चिनुतेऽग्निं चित्वा सौत्रामण्या
यजेतेन्द्रियमेव वीर्यँ सम्भृत्यात्मन्धत्ते ॥३॥

सजूरब्दोऽयावभिः सजूरुषा अरुणीभिः सजूः सूर्य एतशेन सजोषावश्विना
दँसोभिः सजूरग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा संवत्सरो वा अब्दो मासा
अयावा उषा अरुणीः सूर्य एतश इमे अश्विना संवत्सरोऽग्निर्वैश्वानरः
पशव इडा पशवो घृतँ संवत्सरम्पशवोऽनु प्र जायन्ते संवत्सरेणैवास्मै
पशून्प्र जनयति दर्भस्तम्बे जुहोति यद्वा अस्या अमृतं यद्वीर्यं
तद्दर्भास्तस्मिञ्जुहोति प्रैव जायतेऽन्नादो भवति यस्यैवं जुह्वत्येता वै देवता
अग्नेः पुरस्ताद्भागास्ता एव प्रीणात्यथो चक्षुरेवाग्नेः पुरस्तात्प्रति
दधात्यनन्धो भवति य एवं वेदापो वा इदमग्रे सलिलमासीत्स
प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलायत्सः प्रतिष्ठां नाविन्दत स एतदपां
कुलायमपश्यत्तस्मिन्नग्निमचिनुत तदियमभवत्ततो वै स
प्रत्यतिष्ठद्यां पुरस्तादुपादधात्तच्छिरोऽभवत्सा प्राची दिग्यां दक्षिणत
उपादधात्स दक्षिणः पक्षोऽभवत्सा दक्षिणा

दिग्याम्पश्चादुपादधात्तत्पुच्छमभवत्सा प्रतीची दिग्यामुत्तरत उपादधात्स उत्तरः पक्षोऽभवत्सोदीची दिग्यामुपरिष्टादुपादधात्तत्पृष्ठमभवत्सोर्ध्वा दि गियम्वा अग्निः पञ्चेष्टकस्तस्माद्यदस्यां खनन्त्यभीष्टकां तृन्दन्त्यभि शर्करा सर्वा वा इयं वयोभ्यो नक्तं दृशे दीप्यते तस्मादिमां वया सि नक्तं नाध्यासते य एवं विद्वानग्निं चिनुते प्रत्येव तिष्ठत्यभि दिशो जयत्या ग्नेयो वै ब्राह्मणस्तस्माद्ब्राह्मणाय सर्वासु दिक्ष्वर्धुक स्वामेव तद्दिशमन्वैत्य पां वा अग्निः कुलायं तस्मादापोऽग्नि हारुकाः स्वामेव तद्योनिम्प्र विशन्ति ॥४॥

संवत्सरमुख्यम्भृत्वा द्वितीये संवत्सर आग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालम्बार्हस्पत्यं चरुं वैष्णवं त्रिकपालं तृतीये संवत्सरेऽभिजिता यजेत यदष्टाकपालो भवत्यष्टाक्षरा गायत्र्याग्नेयं गायत्रम्प्रातःसवनं प्रातःसवनमेव तेन दाधार गायत्रीं छन्दो यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुगैन्द्रं त्रैष्टुभम्माध्यंदिन सवनं माध्यंदिनमेव सवनं तेन दाधार त्रिष्टुभं छन्दो यद्द्वादशकपालो भवति द्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं तृतीयसवनमेव तेन दाधार जगतीं छन्दो यद्बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानाम्बृहस्पतिर्ब्रह्मैव तेन दाधार यद्वैष्णवस्त्रिकपालो भवति यज्ञो वै विष्णुर्यज्ञमेव तेन दाधार यत्तृतीये संवत्सरेऽभिजिता यजतेऽभिजित्यै यत्संवत्सरमुख्यम्बिभर्तीममेव तेन लोक स्पृणोति यद्द्वितीये संवत्सरेऽग्निं चिनुतेऽन्तरिक्षमेव तेन स्पृणोति यत्तृतीये संवत्सरे यजतेऽमुमेव तेन लोक स्पृणोत्ये तं वै परं आट्णारः कक्षीवा औशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत ततो वै ते सहस्र सहस्रम्पुत्रानविन्दन्त प्रथते

प्रजया पशुभिस्ताम्मात्रामाप्नोति यां तेऽगच्छन्य एवं विद्वानेतमग्निं चिनुते ॥५॥

प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वातिष्ठत्तं देवा बिभ्यतो नोपायन्ते छन्दोभिरात्मानं छादयित्वोपायन्तच्छन्दसां छन्दस्त्वं ब्रह्म वै छन्दाँसि ब्रह्मण एतद्रूपं यत्कृष्णाजिनं कार्ष्णी उपानहावुप मुञ्चते हन्दोभिरेवात्मानं छादयित्वाग्निमुप चरत्यात्मनोऽहिँसायै देवनिधिर्वा एष नि धीयते यदग्निरन्ये वा वै निधिमगुप्तं विन्दन्ति न वा प्रति प्र जानात्युखामा क्रामत्यात्मानमेवाधिपां कुरुते गुप्त्या अथो खल्वाहुर्नाक्रम्येति नैर्ऋृत्युखा यदाक्रामेन्निर्ऋत्या आत्मानमपि दध्यात्तस्मान्नाक्रम्या पुरुषशीर्षमुप दधाति गुप्त्या अथो यथा ब्रूयादेतन्मे गोपायेति तादृगेव तत्प्रजापतिर्वा अथर्वाग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थान्येतँ ह वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो अस्थभिरिति यदिष्टकाभिरग्निं चिनोति सात्मानमेवाग्निं चिनुते सात्मामुष्मिँल्लोके भवति य एवं वेद शरीरं वा एतदग्नेर्यच्चित्य आत्मा वैश्वानरो यच्चिते वैश्वानरं जुहोति शरीरमेव सँस्कृत्याभ्यारोहति शरीरं वा एतद्यजमानः सँस्कुरुते यदग्निं चिनुते यच्चिते वैश्वानरं जुहोति शरीरमेव सँस्कृत्यात्मनाभ्यारोहति तस्मात्तस्य नाव द्यन्ति जीवन्नेव देवानप्येति वैश्वानर्यर्चा पुरीषमुप दधातीयं वा अग्निर्वैश्वानरस्तस्यैषा चितिर्यत्पुरीषमग्निमेव वैश्वानरं चिनुत एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्य तनुवमव रुन्द्धे ॥६॥

अग्नेर्वै दीक्षया देवा विराजमाप्नुवन्तिस्रो रात्रीर्दीक्षितः स्यात्त्रिपदा विराड्विराजमाप्नोति षड्रात्रीर्दीक्षितः स्यात्षड्वा ऋतवः संवत्सरः

संवत्सरो विराड्विराजमाप्नोति दश रात्रीर्दीक्षितः स्याद्दशाक्षरा विराड्विराजमाप्नोति द्वादश रात्रीर्दीक्षितः स्याद्द्वादश मासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति त्रयोदश रात्रीर्दीक्षितः स्यात्त्रयोदश मासाः संवत्सरः संवत्सरो विराड्विराजमानोति पञ्चदश रात्रीर्दीक्षितः स्यात्पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरो विराड्विराजमाप्नोति सप्तदश रात्रीर्दीक्षितः स्याद्द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरो विराड्विराजमाप्नोति चतुर्विँशतिँ रात्रीर्दीक्षितः स्याच्चतुर्विँशतिरर्धमासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति त्रिँशतँ रात्रीर्दीक्षितः स्यात्त्रिँशदक्षरा विराड्विराजमाप्नोति मासं दीक्षितः स्याद्यो मासः स संवत्सरः संवत्सरो विराड्विराजमाप्नोति चतुरो मासो दीक्षितः स्याच्चतुरो वा एतम्मासो वसवोऽबिभरुस्ते पृथिवीमाजयन्गायत्रीं छन्दोऽष्टौ रुद्रास्तेऽन्तरिक्षमाजयन्त्रिष्टुभं छन्दो द्वादशादित्यास्ते दिवमाजयञ्जगतीं छन्दस्ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानां तस्माद्द्वादश मासो भृत्वाग्निं चिन्वीत द्वादश मासाः संवत्सरः संवत्सरोऽग्निश्चित्यस्तस्याहोरात्राणीष्टका आप्तेष्टकमेनं चिनुतेऽथो व्यावृतमेव गच्छति श्रैष्ठ्यँ समानानाम् ॥७॥

सुवर्गाय वा एष लोकाय चीयते यदग्निस्तं यन्नान्वारोहेत्सुवर्गाल्लोकाद्यजमानो हीयेत पृथिवीमाक्रमिषम्प्राणो मा मा हासीदन्तरिक्षमाक्रमिषम्प्रजा मा मा हासीद्दिवमाक्रमिषँ सुवरगन्मेत्याहैष वा अग्नेरन्वारोहस्तेनैवैनमन्वारोहति सुवर्गस्य लोकस्य समष्ट्यै यत्पक्षसम्मिताम्मिनुयात्कनीयाँसं

यज्ञक्रतुमुपेयात्पापीयस्यस्यात्मनः प्रजा स्याद्वेदिसम्मिताम्मिनोति ज्यायाँसमेव यज्ञक्रतुमुपैति नास्यात्मनः पापीयसी प्रजा भवति साहस्रं चिन्वीत प्रथमं चिन्वानः सहस्रसम्मितो वा अयं लोक इममेव लोकमभि जयति द्विषाहस्रं चिन्वीत द्वितीयं चिन्वानो द्विषाहस्रं वा अन्तरिक्षमन्तरिक्षमेवाभि जयति त्रिषाहस्रं चिन्वीत तृतीयं चिन्वानः त्रिषाहस्रो वा असौ लोकोऽमुमेव लोकमभि जयति जानुदघ्नं चिन्वीत प्रथमं चिन्वानो गायत्रियैवेमं लोकमभ्यारोहति नाभिदघ्नं चिन्वीत द्वितीयं चिन्वानस्त्रिष्टुभैवान्तरिक्षमभ्यारोहति ग्रीवदघ्नं चिन्वीत तृतीयं चिन्वानो जगत्यैवामुं लोकमभ्यारोहति नाग्निं चित्वा रामामुपेयादयोनौ रेतो धास्यामीति न द्वितीयं चित्वान्यस्य स्त्रियमुपेयान्न तृतीयं चित्वा कां चनोपेयाद्रेतो वा एतन्नि धत्ते यदग्निं चिनुते यदुपेयाद्रेतसा व्यृध्येताथो खल्वाहुरप्रजस्यं तद्यन्नोपेयादिति यद्रेतःसिचावुपदधाति ते एव यजमानस्य रेतो बिभृतस्तस्मादुपेयाद्रेतसोऽस्कन्दाय त्रीणि वाव रेताँसि पिता पुत्रः पौत्रो यद्द्वे रेतःसिचावुपदध्याद्रेतोऽस्य वि च्छिन्द्यात्तिस्र उप दधाति रेतसः संतत्या इयं वाव प्रथमा रेतःसिग्वाग्वा इयं तस्मात्पश्यन्तीमाम्पश्यन्ति वाचं वदन्तीमन्तरिक्षं द्वितीया प्राणो वा अन्तरिक्षं तस्मान्नान्तरिक्षम्पश्यन्ति न प्राणमसौ तृतीया चक्षुर्वा असौ तस्मात्पश्यन्त्यमूम्पश्यन्ति चक्षुर्यजुषेमां चामूं चोप दधाति मनसा मध्यमामेषां लोकानां क्लृप्त्या अथो प्राणानामिष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीयेत्याह स्तुतशस्त्रे एवैतेन दुहे पिता मातरिश्वाच्छिद्रा पदा धा अच्छिद्रा उशिजः पदानु तक्षुः सोमो विश्वविन्नेता नेषद्बृहस्पतिरुक्थामदानि शँसिषदित्याहैतद्वा अग्नेरुक्थं तेनैवैनमनु शँसति ॥८॥

सू॒यते॒ वा ए॒षो॑ऽग्नी॒नां य उ॒खाया॑म्भ्रि॒यते॒ यद॒धः सा॒दये॒द्गर्भाः॒ प्र॒पादु॑काः स्यु॒रथो॒ यथा॑ स॒वात्प्र॑त्यव॒रोह॑ति ता॒दृगे॒व तदा॑स॒न्दी सा॑दयति॒ गर्भा॑णा॒ं धृत्या॒ अप्र॑पादा॒याथो॑ स॒वमे॒वैनं॑ करोति॒ गर्भो॒ वा ए॒ष यदु॒ख्यो॒ योनि॑ः शि॒क्यं॑ यच्छि॒क्या॑दु॒खां नि॒रूहे॒द्योने॒र्गर्भ॑ं निर्ह॑ण्या॒त्षड्उ॑द्यामꣳ शि॒क्यं॑म्भवति षोढाविहि॒तो वै पुरु॑ष आ॒त्मा च॒ शिर॑श्च च॒त्वार्यङ्गा॑न्या॒त्मन्ने॒वैनं॑म्बिभर्ति प्र॒जाप॑ति॒र्वा ए॒ष यद॒ग्निस्तस्यो॒खा चो॒लूख॑लं च॒ स्तनौ॒ ताव॑स्य प्र॒जा उप॑ जीवन्ति॒ यदु॒खां चो॒लूख॑लं चोप॒दधा॑ति॒ ताभ्या॑मे॒व यज॑मानो॒ऽमुष्मि॑ँल्लो॒केऽग्निं दु॑हे संवत्स॒रो वा ए॒ष यद॒ग्निस्तस्य॑ त्रेधाविहि॒ता इष्ट॑काः प्राजाप॒त्या वैष्ण॒वीर्वै॑श्वकर्म॒णीर॑होरा॒त्राण्ये॒वास्य॑ प्राजाप॒त्या यदु॒ख्य॑म्बि॒भर्ति॑ प्राजाप॒त्या ए॒व तदुप॑ धत्ते॒ यत्स॒मिध॑ आ॒दधा॑ति वैष्ण॒वा वै व॒नस्पत॑यो वैष्ण॒वीरे॒व तदुप॑ धत्ते॒ यदिष्ट॑काभिर॒ग्निं चि॒नोती॒यं वै वि॒श्वक॑र्मा वैश्वकर्म॒णीरे॒व तदुप॑ धत्ते॒ तस्मा॑दाहुस्त्रि॒वृद॒ग्निरिति॒ तं वा ए॒तं यज॑मान ए॒व चि॑न्वीत॒ यद॑स्या॒न्यश्चि॑नु॒याद्यत्तं दक्षि॑णाभि॒र्न रा॒धये॑द॒ग्निम॑स्य वृञ्जीत॒ यो॑ऽस्या॒ग्निं चि॑नु॒यात्तं दक्षि॑णाभी राधये॒द॒ग्निमे॒व तत्स्पृ॑णोति ॥६॥

प्र॒जाप॑तिर॒ग्निम॑चिनुत॒र्तुभि॑ः संवत्स॒रं व॑स॒न्तेनै॒वास्य॑ पूर्वा॒र्धम॑चिनुत ग्री॒ष्मेण॒ दक्षि॑णम्प॒क्षं व॒र्षाभि॒ः पुच्छꣳ श॒रदोत्त॑रम्प॒क्षꣳ हे॑म॒न्तेन॒ मध्य॒ं ब्रह्म॑णा॒ वा अ॑स्य तत्पूर्वा॒र्धम॑चिनुत क्ष॒त्रेण॒ दक्षि॑णम्प॒क्षं प॒शुभि॒ः पुच्छ॑ं वि॒शोत्त॑रम्प॒क्षमा॒शया॒ मध्य॒ं य ए॒वं वि॒द्वान॒ग्निं चि॑नु॒त ऋ॒तुभि॑रे॒वैनं॑ चिनु॒तेऽथो॑ ए॒तदे॒व सर्व॒मव॑ रुन्द्धे शृ॒ण्वन्त्ये॑नम॒ग्निं चि॑क्या॒नमत्त्य॒न्नꣳ रोच॑त इ॒यं वाव प्र॑थ॒मा चिति॒रोष॑धयो॒ व॒नस्पत॑य॒ः पुरी॑षम॒न्तरि॑क्षं द्वि॒तीया॒

वया॑ꣳसि पुरी॑षम॒सौ तृ॒तीया॒ नक्ष॑त्राणि॒ पुरी॑षं य॒ज्ञश्च॑तु॒र्थी दक्षि॑णा॒ पुरी॑षं॒ यज॑मानः पञ्च॒मी प्र॒जा पुरी॑षं॒ यत्त्रिचि॑तीकं चिन्वी॒त य॒ज्ञं दक्षि॑णाम॒त्मान॑म्प्र॒जाम॒न्तरी॑या॒त्तस्मा॒त्पञ्च॑चितीकश्चेत॒व्य॑ ए॒तदे॒व सर्व॑ꣳ स्पृणोति॒ यत्ति॒स्रश्चित॑यः त्रि॒वृद्ध्य॑ग्निर्यद्द्वे द्वि॒पाद्यज॑मान॒ः प्रति॑ष्ठित्यै॒ पञ्च॒ चित॑यो भवन्ति॒ पाङ्क्तः॒ पुरु॑ष आ॒त्मान॑मे॒व स्पृ॑णोति॒ पञ्च॒ चित॑यो भवन्ति प॒ञ्चभि॒ः पुरी॑षैर॒भ्यू॑हति॒ दश॒ सम्प॑द्यन्ते॒ दशा॑क्षरो॒ वै पुरु॑षो॒ यावा॑ने॒व पुरु॑ष॒स्तꣳ स्पृ॑णो॒त्यथो॒ दशा॑क्षरा वि॒राडन्नं॑ वि॒राड्वि॒राज्ये॒वान्नाद्ये॒ प्रति॑ तिष्ठति संवत्स॒रो वै ष॒ष्ठी चिति॑र्ऋ॒तव॒ः पुरी॑ष॒ꣳ षट्चित॑यो भवन्ति॒ षट्पुरी॑षाणि॒ द्वाद॑श॒ सम्प॑द्यन्ते॒ द्वाद॑श॒ मासा॑ः संवत्स॒रः सं॑वत्स॒र ए॒व प्रति॑ तिष्ठति ॥१०॥

रोहि॑तो धू॒म्ररो॑हितः क॒र्कन्धु॑रोहित॒स्ते प्रा॑जाप॒त्या ब॒भ्रुर॑रु॒णब॑भ्रु॒ः शुक॑बभ्रु॒स्ते रौ॒द्राः श्येत॑ः श्येता॒क्षः श्येत॑ग्रीव॒स्ते पि॑तृदेव॒त्या॑ स्ति॒स्रः कृ॒ष्णा व॒शा वा॑रु॒ण्य॑ स्ति॒स्रः श्वे॒ता व॒शाः सौ॒र्यो मैत्राबार्हस्प॒त्या धू॒म्रल॑लामास्तूप॒राः ॥११॥

पृश्नि॑स्तिर॒श्चीन॑पृश्निरू॒र्ध्वपृ॑श्नि॒स्ते मा॑रु॒ताः फ॒ल्गूर्लो॑हितो॒र्णी ब॑ल॒क्षी ताः सा॑रस्व॒त्य॑ः पृष॑ती स्थू॒लपृ॑षती क्षु॒द्रपृ॑षती॒ ता वैश्वदे॒व्य॑ स्ति॒स्रः श्या॒मा व॒शाः पौ॒ष्णिय॑ स्ति॒स्रो रोहि॑णीर्व॒शा मै॒त्रिय॑ ऐन्द्राबार्हस्प॒त्या अ॑रु॒णल॑लामास्तूप॒राः ॥१२॥

शि॒ति॒बा॒हु॒रन्यत॑ःशितिबाहुः सम॒न्तशि॑तिबाहु॒स्त ऐ॑न्द्रवाय॒वाः शि॑ति॒रन्ध्रो॒ऽन्यत॑ःशितिरन्ध्रः सम॒न्तशि॑तिरन्ध्र॒स्ते मैत्रावरु॒णाः शु॒द्धवा॑लः

सुर्वशुंद्धवालो मुणिवालुस्त आश्विना स्तिस्त्रः शिल्पा वुशा
वैश्वदेव्य स्तिस्त्रः श्येनीः परमेष्ठिने सोमापौष्णाः श्यामलंलामास्तूपराः
॥१३॥

उन्नत ऋषुभो वामुनस्त ऐन्द्रावरुणाः शितिककुच्छितिपृष्ठः शितिभसुत्त
ऐन्द्राबार्हस्पुत्याः शितिपाच्छित्योष्ठः शितिभ्रुस्त ऐन्द्रावैष्णुवा स्तिस्त्रः
सिध्मा वुशा वैश्वकर्मुरय स्तिस्त्रो धात्रे पृषोदुरा ऐन्द्रापौष्णाः
श्येतंललामास्तूपराः ॥१४॥

कुर्णास्त्रयो यामाः सौम्यास्त्रयः श्वितिङ्गा अग्नये यविष्ठाय त्रयो
नकुला स्तिस्त्रो रोहिणीस्त्र्यव्युस्ता वसूनां तिस्त्रोऽरुणा दित्यौह्यस्ता
रुद्राणाꣳ सोमैन्द्रा बुभ्रुलंलामास्तूपराः ॥१५॥

शुरठास्त्रयो वैष्णुवा अधीलोधुकर्णास्त्रयो विष्णव उरुक्रमाय
लप्सुदिनुस्त्रयो विष्णव उरुगायाय पञ्चावीस्तिस्त्र आदित्यानां
त्रिवुत्सास्तिस्त्रोऽङ्गिरसा मैन्द्रावैष्णुवा गौरलंलामास्तूपराः ॥१६॥

इन्द्राय राज्ञे त्रयः शितिपृष्ठा इन्द्रायाधिराजाय त्रयः शितिककुद इन्द्राय
स्वराज्ञे त्रयः शितिभसद स्तिस्त्रस्तुर्यौह्यः साध्यानां तिस्त्रः पष्ठौह्यो
विश्वेषां देवानां माग्नेन्द्राः कृष्णलंलामास्तूपराः ॥१७॥

अदित्यै त्रयो रोहितैता इन्द्राण्यै त्रयः कृष्णैताः कुह्वै त्रयोऽरुणैता तिस्त्रो
धेनवो राकायै त्रयोऽनुड्वाहः सिनीवाल्या आग्नावैष्णुवा

रोहिंतललामास्तूपराः ॥१८॥

सौम्यास्त्रयः पिशंगाः सोमाय राज्ञे त्रयः सारङ्गाः
पार्जन्या नभोरूपास्तिस्रोऽजा मल्हा इन्द्राण्यै तिस्रो मेष्य आदित्या
द्यावापृथिव्या मालङ्गास्तूपराः ॥१९॥

वारुणास्त्रयः कृष्णललामा वरुणाय राज्ञे त्रयो रोहिंतललामा वरुणाय
रिशादसे त्रयोऽरुणललामाः शिल्पास्त्रयो वैश्वदेवा स्त्रयः पृश्नयः
सर्वदेवत्या ऐन्द्रासूराः श्येतललामास्तूपराः ॥२०॥

सोमाय
स्वराज्ञेऽनोवाहावनड्वाहा विन्द्राग्निभ्यामोजोदाभ्यामुष्टारा विन्द्राग्निभ्या
म्बलदाभ्याँ सीरवाहाववी द्वे धेनू भौमी दिग्भ्यो वडबे द्वे धेनू भौमी
वैराजी पुरुषी द्वे धेनू भौमी वायव आरोहणवाहावनड्वाहौ वारुणी कृष्णे
वशे अराड्यौ दिव्यावृषभौ परिमरौ ॥२१॥

एकादश प्रातर्गव्याः पशव आ लभ्यन्ते छगलः कल्माषः
किकिदीविर्विदीगयस्ते त्वाष्ट्राः सौरीर्नव श्वेता वशा अनूबन्ध्या
भवन्त्या ग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आ लभ्यन्ते ॥२२॥

पिशङ्गास्त्रयो वासन्ताः सारङ्गास्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः
पृश्नयस्त्रयः शारदाः पृश्निसक्थास्त्रयो हैमन्तिका अवलिप्तास्त्रयः
शैशिराः संवत्सराय निवक्षसः ॥२३॥

इति पञ्चमकाण्डे षष्ठः प्रपाठकः ६

## अथ पञ्चमकाण्डे सप्तमः प्रपाठकः ७

यो वा अयथादेवतमग्निं चिनुत आ देवताभ्यो वृश्चयते पापीयान्भवति यो यथादेवतं न देवताभ्य आ वृश्चयते वसीयान्भवत्याग्नेय्या गायत्रिया प्रथमां चितिमभि मृशेत्त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थीम्पङ्क्त्या पञ्चमीं यथादेवतमेवाग्निं चिनुते न देवताभ्य आ वृश्चयते वसीयान्भवती डायै वा एषा विभक्तिः पशव इडा पशुभिरेनं चिनुते यो वै प्रजापतये प्रतिप्रोच्याग्निं चिनोति नार्तिमार्च्छत्यश्वावभितस्तिष्ठेतां कृष्ण उत्तरतः श्वेतो दक्षिणस्तावालभ्येष्टका उप दध्यादेतद्वै प्रजापते रूपं प्राजापत्योऽश्वः साक्षादेव प्रजापतये प्रतिप्रोच्याग्निं चिनोति नार्तिमार्च्छत्ये तद्वा अह्नो रूपं यच्छ्वेतोऽश्वो रात्रियै कृष्ण एतदह्नो रूपं यदिष्टका रात्रियै पुरीषमिष्टका उपधास्यञ्छ्वेतमश्वमभि मृशेत्पुरीषमुपधास्यन्कृष्णमहोरात्राभ्यामेवैनं चिनुते हिरण्यपात्रम्मधोः पूर्णं ददाति मधव्योऽसानीति सौर्या चित्रवत्यावेक्षते चित्रमेव भवति मध्यंदिनेऽश्वमव घ्रापयत्यसौ वा आदित्य इन्द्र एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति ॥१॥

त्वामग्ने वृषभं चेकितानम्पुनर्युवानं जनयन्नुपागाम् । अस्थूरि णो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳ शिशाधि ॥
पशवो वा एते यदिष्टकाश्चित्यांचित्यामृषभमुप दधाति मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय तस्माद्यूथेयूथ ऋषभः ॥
संवत्सरस्य प्रतिमां यां त्वा रात्र्युपासते । प्रजाꣳ सुवीरां कृत्वा विश्वमायुर्व्यश्नवत् ॥
प्राजापत्यामेतामुप दधातीयं वावैषैकाष्टका यदेवैकाष्टकायामन्नं क्रियते

तदेवैतयाव रुन्द्ध एषा वै प्रजापतेः कामदुघा तयैव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे येन देवा ज्योतिषोर्ध्वा उदायन्येनादित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानः स्वस्ति ॥

सुवर्गाय वा एष लोकाय चीयते यदग्निर्येन देवा ज्योतिषोर्ध्वा उदायन्नित्युख्यँ समिन्द्ध इष्टका एवैता उप धत्ते वानस्पत्याः सुवर्गस्य लोकस्य समष्टयै शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे । शतं यो नः शरदो अजीतानिन्द्रो नेषदति दुरिडतानि विश्वा ॥

ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषां यो अज्यानिमजीतिमावहात्तस्मै नो देवाः परि दत्तेह सर्वे ॥

ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः सुवितं नो अस्तु । तेषामृतूनाँ शतशारदानां निवात एषामभये स्याम ॥

इदुवत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः । तेषां वयँ सुमतौ यज्ञियानां ज्योगजीता अहताः स्याम ॥

भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा । स नो मयोभूः पितो आ विशस्व शं तोकाय तनुवे स्योनः ॥

अज्यानीरेता उप दधात्येता वै देवता अपराजितास्ता एव प्र विशति नैव जीयते ब्रह्मवादिनो वदन्ति यदर्धमासा मासा ऋतवः संवत्सर ओषधीः पचन्त्यथ कस्मादन्याभ्यो देवताभ्य आग्रयणं निरुप्यत इत्येता हि तद्देवता उदजयन्यदृतुभ्यो निर्वपेद्देवताभ्यः समदं दध्यादाग्रयणं निरुप्यैता आहुतीर्जुहोत्यर्धमासानेव मासानृतून्त्संवत्सरम्प्रीणाति न देवताभ्यः समदं दधाति भद्रान्नः श्रेयः समनैष्ट देवा इत्याह हुताद्याय यजमानस्यापराभावाय ॥२॥

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो नः पुरस्ता द्दक्षिणतः पश्चा दुत्तरतोऽघायुरभिदासत्येत ँ सोऽश्मानमृच्छतु ॥
देवासुराः संयत्ता आसन्तेऽसुरा दिग्भ्य आबाधन्त तान्देवा इष्वा च वज्रेण चापानुदन्त यद्वज्रिणीरुपदधातीष्वा चैव तद्वज्रेण च यजमानो भ्रातृव्यानप नुदते दिक्षूप दधाति देवपुरा एवैतास्तनूपानीः पर्यूहतेऽग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरा गतम् ॥
ब्रह्मवादिनो वदन्ति यन्न देवतायै जुह्वत्यथ किंदेवत्या वसोर्धारेत्यग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धाराग्नावैष्णव्यर्चा वसोर्धारां जुहोति भागधेयेनैवैनौ समर्धयत्यथो एतामेवाहुतिमायतनवतीं करोति यत्काम एनां जुहोति तदेवाव रुन्द्धे रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या यच्छतरुद्रीयं जुहोति यैवास्य घोरा तनूस्तां तेन शमयति यद्वसोर्धारां जुहोति यैवास्य शिवा तनूस्तां तेन प्रीणाति यो वै वसोर्धारायै प्रतिष्ठां वेद प्रत्येव तिष्ठति यदाज्यमुच्छिष्येत तस्मिन्ब्रह्मौदनम्पचेत्तम्ब्राह्मणाश्चत्वारः प्राश्नीयुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मण एषा खलु वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियायामेवैनां तनुवाम्प्रति ष्ठापयति चतस्रो धेनूर्दद्यात्ताभिरेव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे ॥३॥

चित्तिं जुहोमि मनसा घृतेनेत्याहादाभ्या वै नामैषाहुतिर्वैश्वकर्मणी नैनं चिक्यानम्भ्रातृव्यो दभ्नोत्यथो देवता एवाव रुन्द्धेऽग्ने तमद्येति पङ्क्त्या जुहोति पङ्क्त्याहुत्या यज्ञमुखमा रभते सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह होत्रा एवाव रुन्द्धेऽग्निर्देवेभ्योऽपाक्रामद्भागधेयमिच्छमानस्तस्मा

एतद्भागधेयम्प्रायच्छन्नेतद्वा अग्नेरग्निहोत्रमेतर्हि खलु वा एष जातो यर्हि
सर्वश्चितो जातायैवास्मा अन्नमपि दधाति स एनम्प्रीतः प्रीणाति
वसीयान्भवति ब्रह्मवादिनो वदन्ति यदेष गार्हपत्यश्चीयतेऽथ
क्वास्याहवनीय इत्यसावादित्य इति ब्रूयादेतस्मिन्हि सर्वाभ्यो
देवताभ्यो जुह्वति य एवं विद्वानग्निं चिनुते साक्षादेव देवता ऋध्नोत्यग्ने
यशस्विन्यशसेममर्पयेन्द्रावतीमपचितीमिहा वह । अयम्मूर्धा परमेष्ठी
सुवर्चाः समानानामुत्तमश्लोको अस्तु ॥
भद्रम्पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयः सुवर्विदः । ततः
क्षत्रम्बलमोजश्च जातं अदस्मै देवा अभि सं नमन्तु ॥
धाता विधाता परमोत संदृक्प्रजापतिः परमेष्ठी विराजा ।
स्तोमाश्छन्दाँसि निविदो म आहुरेतस्मै राष्ट्रमभि सं नमाम ॥
अभ्यावर्तध्वमुप मेत साकमयँ शास्ताधिपतिर्वो अस्तु । अस्य
विज्ञानमनु सँ रभध्वमिमम्पश्चादनु जीवाथ सर्वे ॥ राष्ट्रभृत एता उप
दधात्येषा वा अग्नेश्चिती राष्ट्रभृ त्तयैवास्मिन्राष्ट्रं दधाति राष्ट्रमेव भवति
नास्माद्राष्ट्रम्भ्रँशते ॥४॥

यथा वै पुत्रो जातो म्रियत एवं वा एष म्रियते यस्याग्निरुख्य उद्वायति
यन्निर्मन्थ्यं कुर्याद्वि च्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्स एव पुनः परीध्यः
स्वादेवैनं योनेर्जनयति नास्मै भ्रातृव्यं जनयति तमो वा एतं गृह्णाति
यस्याग्निरुख्य उद्वायति मृत्युस्तमः कृष्णं वासः कृष्णा धेनुर्दक्षिणा
तमसैव तमो मृत्युमप हते हिरण्यं ददाति
ज्योतिर्वै हिरण्यं ज्योतिषैव तमोऽप हतेऽथो तेजो वै हिरण्यं तेज
एवात्मन्धत्ते सुवर्न घर्मः स्वाहा सुवर्नार्कः स्वाहा सुवर्न शुक्रः स्वाहा

सुवर्न ज्योतिः स्वाहा सुवर्न सूर्यः स्वाहार्को वा एष यदग्निरसावादित्योऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतीँषि सं दधात्येष ह त्वा अर्काश्वमेधी यस्यैतदग्नौ क्रियत आपो वा इदमग्रे सलिलमासीत्स एताम्प्रजापतिः प्रथमां चितिमपश्यत्तामुपाधत्त तदियमभवत्तं विश्वकर्माब्रवीदुप त्वायानीति नेह लोकोऽस्तीत्यब्रवीत्स एतां द्वितीयां चितिमपश्यत्तामुपाधत्त तदन्तरिक्षमभवत्स यज्ञः प्रजापतिम्ब्रवीदुप त्वायानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणमब्रवीदुप त्वायानीति केन मोपैष्यसीति दिश्याभिरित्यब्रवीत्तं दिश्याभिरुपैत्ता उपाधत्त ता दिशोऽभवन्त्स परमेष्ठी प्रजापतिमब्रवीदुप त्वायानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं च यज्ञं चाब्रवीदुप वामायानीति नेह लोकोऽस्तीत्यब्रूताँ स एतां तृतीयां चितिमपश्यत्तामुपाधत्त तदसावभवत्स आदित्यः प्रजापतिमब्रवीदुप त्वायानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं च यज्ञं चाब्रवीदुप वामायानीति नेह लोकोऽस्तीत्यब्रूताँ स परमेष्ठिनमब्रवीदुप त्वायानीति केन मोपैष्यसीति लोकम्पृणयेत्यब्रवीत्तं लोकम्पृणयोपैत्तस्मादयातयाम्नी लोकम्पृणाऽयातयामा ह्यसावादित्यस्तानृषयोऽब्रुवन्नुप व आयामेति केन न उपैष्यथेति भूम्नेत्यब्रुवन्तान्द्वाभ्यां चितीभ्यामुपायन्त्स पञ्चचितीकः समपद्यत य एवं विद्वानग्निं चिनुते भूयानेव भवत्यभीमाँल्लोकाञ्जयति विदुरेनं देवा अथो एतासामेव देवतानाँ सायुज्यं गच्छति ॥५॥

वयो वा अग्निर्यदग्निचित्पक्षिणोऽश्नीयात्तमेवाग्निमद्यादार्तिमार्च्छेत्संवत्सरं व्रतं चरेत्संवत्सरँ हि व्रतं नाति पशुर्वा एष यदग्निर्हिनस्ति खलु वै तम्पशुर्य एनम्पुरस्तात्प्रत्यञ्चमुपचरति तस्मात्पश्चात्प्राङुपचर्य

आत्मनोऽहिँसायै तेजोऽसि तेजो मे यच्छ पृथिवीं यच्छ पृथिव्यै मा पाहि ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहि सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाही त्याहैताभिर्वा इमे लोका विधृता यदेता उपदधात्येषां लोकानां विधृत्यै स्वयमातृण्णा उपधाय हिरण्येष्टका उप दधातीमे वै लोकाः स्वयमातृण्णा ज्योतिर्हिरण्यं यत्स्वयमातृण्णा उपधाय हिरण्येष्टका उपदधातीमानेवैताभिर्लोकाञ्ज्योतिष्मतः कुरुतेऽथो एताभिरेवास्मा इमे लोकाः प्र भान्ति यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः । ताभिः सर्वाभी रुचे जनाय नस्कृधि ॥

या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः । इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते ॥

रुचं नो धेहि ब्राह्मणेषु रुचँ राजसु नस्कृधि । रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥

द्वेधा वा अग्निं चिक्यानस्य यश इन्द्रियं गच्छत्यग्निं वा चितमीजानं वा यदेता आहुतीर्जुहोत्यात्मन्नेव यश इन्द्रियं धत्त ईश्वरो वा एष आर्तिमार्तोर्योऽग्निं चिन्वन्नधिक्रामति तत्त्वा यामि ब्रह्मणा वन्दमान इति वारुण्यर्चा जुहुयाच्छान्तिरेवैषाग्नेर्गुप्तिरात्मनो हविष्कृतो वा एष योऽग्निं चिनुते यथा वै हविः स्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्यामिक्षया यजेत मैत्रावरुणतामेवोपैत्यात्मनोऽस्कन्दाय यो वा अग्निमृतुस्थां वेदर्तुर्ऋतुरस्मै कल्पमान एति प्रत्येव तिष्ठति संवत्सरो वा अग्निर्ऋतुस्थास्तस्य वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षाः पुच्छँ शरदुत्तरः पक्षो हेमन्तो मध्यम्पूर्वपक्षाश्चितयोऽपरपक्षाः पुरीषमहोरात्राणीष्टका एष वा

अ॒ग्निर्ऋ॑तु॒स्था य ए॒वं वेद॒र्तुर्ऋ॑तुरस्मै॒ कल्प॑मान ए॒ति प्रत्ये॒व ति॑ष्ठति प्र॒जाप॑ति॒र्वा ए॒तं ज्यैष्ठ्य॑कामो॒ न्य॑धत्त॒ तत॒ो वै स ज्यैष्ठ्य॑मगच्छ॒द्य ए॒वं वि॒द्वान॒ग्निं चि॑नु॒ते ज्यैष्ठ्य॑मे॒व ग॑च्छति ॥६॥

यदाकू॑तात्स॒मसु॑स्रोद्धृ॒दो वा॒ मन॑सो वा॒ सम्भृ॑तं॒ चक्षु॑षो वा । तमनु॒ प्रेहि॑ सुकृ॒तस्य॑ लो॒कं यत्रर्ष॑यः प्रथम॒जा ये पु॑रा॒णाः ॥
ए॒तꣳ स॑धस्थ॒ परि॑ ते ददामि॒ यमा॒वहा॑च्छेव॒धिं जा॒तवे॑दाः । अ॒न्वा॒ग॒न्ता य॒ज्ञप॑तिर्वो॒ अत्र॒ तꣳ स्म॑ जानीत पर॒मे व्यो॑मन् ॥
जा॒नी॒तादे॑नम्पर॒मे व्यो॑म॒न्देवाः॑ सधस्था वि॒द रू॒पम॑स्य ।
यदा॒गच्छा॑त्प॒थिभि॑र्देव॒यानै॑रिष्टापू॒र्ते कृ॑णुतादा॒विर॑स्मै ॥
सम्प्र च्य॑वध्व॒मनु॒ सम्प्र या॒ताग्ने॑ प॒थो देव॒याना॑न्कृणुध्वम् ।
अ॒स्मिन्त्स॒धस्थे॒ अध्युत्त॑रस्मि॒न्विश्वे॑ दे॒वा यज॑मानश्च सीदत ॥
प्रस्त॒रेण॑ परि॒धिना॑ स्रु॒चा वेद्या॑ च ब॒र्हिषा॑ । ऋ॒चेमं य॒ज्ञं नो॑ वह॒ सुव॑र्दे॒वेषु॒ गन्त॑वे ॥
यदि॒ष्टम्यत्प॑रा॒दान॒ं यद्द॒त्तं या च॒ दक्षि॑णा । तद॒ग्निर्वै॑श्वकर्म॒णः सुव॑र्दे॒वेषु॑ नो दधत् ॥
येना॑ स॒हस्रं॒ वह॑सि॒ येना॑ग्ने सर्ववेद॒सम् । तेने॒मं य॒ज्ञं नो॑ वह॒ सुव॑र्दे॒वेषु॒ गन्त॑वे ॥
येना॑ग्ने॒ दक्षि॑णा यु॒क्ता य॒ज्ञं वह॑न्त्यृ॒त्विजः॑ । तेने॒मं य॒ज्ञं नो॑ वह॒ सुव॑र्दे॒वेषु॒ गन्त॑वे ॥
येना॑ग्ने सु॒कृतः॑ प॒था मधो॒र्धारा॑ व्यान॒शुः । तेने॒मं य॒ज्ञं नो॑ वह॒ सुव॑र्दे॒वेषु॒ गन्त॑वे ॥
यत्र॒ धारा॒ अन॑पेता॒ मधो॒र्घृ॒तस्य॑ च॒ याः । तद॒ग्निर्वै॑श्वकर्म॒णः सुव॑र्दे॒वेषु॑ नो

दधत् ॥७॥

यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः । ये ते अग्ने मेडयो य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन् ॥
उत्सन्नयज्ञो वा एष यदग्निः किं वाहैतस्य क्रियते किं वा न यद्वा अध्वर्युरग्नेश्चिन्वन्नन्तरेत्यात्मनो वै तदन्तरेति यास्ते अग्ने समिधो यानि धामेत्याहैषा वा अग्नेः स्वयंचितिरग्निरेव तदग्निं चिनोति नाध्वर्युरात्मनोऽन्तरेति चतस्र आशाः प्र चरन्त्वग्नय इमं नो यज्ञं नयतु प्रजानन् । घृतम्पिन्वन्नजरꣳ सुवीरम्ब्रह्म समिद्भवत्याहुतीनाम् ॥
सुवर्गाय वा एष लोकायोप धीयते यत्कूर्मश्चतस्र आशाः प्र चरन्त्वग्नय इत्याह ।२। दिश एवैतेन प्र जानातीमं नो यज्ञं नयतु प्रजानन्नित्याह सुवर्गस्य लोकस्याभिनीत्यै ब्रह्म समिद्भवत्याहुतीनामित्याह ब्रह्मणा वै देवाः सुवर्गं लोकमायन्यद्ब्रह्मण्वत्योपदधाति ब्रह्मणैव तद्यजमानः सुवर्गं लोकमेति प्रजापतिर्वा एष यदग्निस्तस्य प्रजाः पशवश्छन्दाꣳसि रूपꣳ सर्वान्वर्णानिष्टकानां कुर्याद्रूपेणैव प्रजाम्पशूञ्छन्दाꣳस्यव रुन्द्धेऽथो प्रजाभ्य एवैनम्पशुभ्यश्छन्दोभ्योऽवरुद्ध्य चिनुते ॥८॥

मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मयि प्रजाम्मयि वर्चो दधाम्यरिष्टाः स्याम तनुवा सुवीराः ॥ यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याꣳ आविवेश । तमात्मन्परि गृह्णीमहे वयम्मा सो अस्माꣳ अवहाय परा गात् ॥
यदध्वर्युरात्मन्नग्निमगृहीत्वाग्निं चिनुयाद्योऽस्य स्वोऽग्निस्तमपि यजमानाय चिनुयादग्निं खलु वै पशवो ऽनूप तिष्ठन्तेऽपक्रामुका अस्मात्पशवः

स्युर्मयि गृह्णाम्यग्रे अग्निमित्याहात्मन्नेव स्वमग्निं दाधार नास्मात्पशवोऽप क्रामन्ति ब्रह्मवादिनो वदन्ति यन्मृच्चापश्चाग्नेरनाद्यमथ कस्मान्मृदा चाद्भिश्चाग्निश्चीयत इति यदद्भिः संयौत्यापो वै सर्वा देवता देवताभिरेवैनꣳ सꣳ सृजति यन्मृदा चिनोतीयं वा अग्निर्वैश्वानरोऽग्निनैव तदग्निं चिनोति ब्रह्मवादिनो वदन्ति यन्मृदा चाद्भिश्चाग्निश्चीयतेथ कस्मादग्निरुच्यत इति यच्छन्दोभिश्चिनोत्यग्रयो वै छन्दाꣳसि तस्मादग्निरुच्यतेऽथो इयं वा अग्निर्वैश्वानरो यन्मृदा चिनोति तस्मादग्निरुच्यते हिरण्येष्टका उप दधाति ज्योतिर्वै हिरण्यं ज्योतिरेवास्मिन्दधात्यथो तेजो वै हिरण्यं तेज एवात्मन्धत्ते यो वा अग्निꣳ सर्वतोमुखं चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयति गायत्रीम्पुरस्तादुप दधाति त्रिष्टुभं दक्षिणतो जगतीम्पश्चादनुष्टुभमुत्तरतः पङ्क्तिम्मध्य एष वा अग्निः सर्वतोमुखस्तं य एवं विद्वाꣳश्चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयत्यथो दिश्यैव दिशम्प्र वयति तस्माद्दिशि दिक्प्रोता ॥६॥

प्रजापतिरग्निमसृजत सोऽस्मात्सृष्टः प्राङ्प्राद्रवत्तस्मा अश्वम्प्रत्यास्यत्स दक्षिणावर्तत तस्मै वृष्णिम्प्रत्यास्यत्स प्रत्यङ्ङावर्तत तस्मा ऋषभम्प्रत्यास्यत्स उदङ्ङावर्तत तस्मै बस्तम्प्रत्यास्यत्स ऊर्ध्वोऽद्रवत्तस्मै पुरुषम्प्रत्यास्यद्यत्पशुशीर्षाण्युपदधाति सर्वत एवैनमवरुध्य चिनुत एता वै प्राणभृतश्चक्षुष्मतीरिष्टका यत्पशुशीर्षाणि यत्पशुशीर्षाण्युपदधाति ताभिरेव यजमानोऽमुष्मिँल्लोके प्राणित्यथो ताभिरेवास्मा इमे लोकाः प्र भान्ति मृदाभिलिप्योप दधाति मेध्यत्वाय पशुर्वा एष यदग्निरन्नम्पशव एष खलु वा अग्निर्यत्पशुशीर्षाणि यं कामयेत कनीयोऽस्यान्नꣳ स्यादिति

यजमानस्य प्रमायुकँ स्या द्यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेदेष वै वनस्पतीनामप्रतिष्ठितोप्रतिष्ठित एव भवति यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेदेष वै वनस्पतीनामपशव्योऽपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति बहुपर्णं तस्मै बहुशाखं वृश्चेदेष वै वनस्पतीनाम्पशव्यः पशुमानेव भवति प्रतिष्ठितं वृश्चेत्प्रतिष्ठाकामस्यैष वै वनस्पतीनाम्प्रतिष्ठितो यः समे भूम्यै स्वाद्योनै रूढः प्रत्येव तिष्ठति यः प्रत्यङ्ङुपनतस्तं वृश्चेत्स हि मेधमभ्युपनतः पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपैनमुत्तरो यज्ञो नमति षडरत्निम्प्रतिष्ठाकामस्य षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति सप्तारत्निम्पशुकामस्य सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्धे नवारत्निं तेजस्कामस्य त्रिवृता स्तोमेन सम्मितं तेजस्त्रिवृत्तेजस्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशारत्निम्भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशारत्निम्प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविँशत्यरत्निम्प्रतिष्ठाकामस्यैकविँशः स्तोमानाम्प्रतिष्ठा प्रतिष्ठित्या अष्टाश्रिर्भवत्यष्टाक्षरा गायत्री तेजो गायत्री गायत्री यज्ञमुखं तेजसैव गायत्रिया यज्ञमुखेन सम्मितः ॥३॥

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनं लोकेभ्यः प्रोक्षति पराञ्चम्प्रोक्षति पराङिव हि सुवर्गो लोकः क्रूरमिव वा एतत्करोति यत्खनत्यपोव नयति शान्त्यै यवमतीरव नयत्यूर्ग्वै यवो यजमानेन यूपः सम्मितो यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति पितृणाँ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्याँ ह्येतद्यन्निखातं

यद्बर्हिरनवस्तीर्य मिनुयात्पितृदेवत्यो निखातः स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनम्मिनोति यूपशकलमवास्यति सतेजसमेवैनम्मिनोति देवस्त्वा सविता मध्वानक्त्वित्याह तेजसैवैनमनक्ति सुपिप्पलाभ्यस्त्वौषधीभ्य इति चषालम्प्रति मुञ्चति तस्माच्छीर्षत ओषधयः फलं गृह्णन्त्यनक्ति तेजो वा आज्यं यजमानेनाग्निष्ठाश्रिः सम्मिता यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसानक्त्यान्तमनक्त्यान्तमेव यजमानं तेजसानक्ति सर्वतः परि मृशत्यपरिवर्गमेवास्मिन्तेजो दधात्युद्दिवं स्तभानान्तरिक्षम्पृणेत्याहैषां लोकानां विधृत्यै वैष्णव्यर्चा कल्पयति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतया कल्पयति द्वाभ्यां कल्पयति द्विपाद्यजमानः प्रतिष्ठित्यै यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयादित्थं वेत्थं वाति नावयेत्तेजसैवैनं देवताभिरिन्द्रियेण व्यर्धयति यं कामयेत तेजसैनं देवताभिरिन्द्रियेण समर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयेन सम्मिनुयात्तेजसैवैनं देवताभिरिन्द्रियेण समर्धयति ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतत्परि व्ययत्यूर्ग्वै रशना यजमानेन यूपः सम्मितो यजमानमेवोर्जा समर्धयति नाभिदघ्ने परि व्ययति नाभिदघ्न एवास्मा ऊर्जं दधाति तस्मान्नाभिदघ्न ऊर्जा भुञ्जते यं कामयेतोर्जैनं व्यर्धयेयमित्यूर्ध्वां वा तस्यावाचीं वावोहेदूर्जैवैनं व्यर्धयति यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यवाचीमवोहेद्वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्यूर्ध्वामुदूहेद्वृष्टिमेवोद्यच्छति पितृणां निखातम्मनुष्याणामूर्ध्वं निखातादा रशनाया ओषधीनाꣳ रशना विश्वेषां देवानामूर्ध्वꣳ रशनाया आ चषालादिन्द्रस्य चषालꣳ साध्यानामतिरिक्तꣳ स वा एष सर्वदेवत्यो यद्यूपो यद्यूपम्मिनोति सर्वा एव देवताः प्रीणाति

यज्ञेन वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति
ते यूपेन योपयित्वा सुवर्गं लोकमायन्तमृषयो यूपेनैवानु प्राजानन्तद्यूपस्य
यूपत्वं यद्यूपम्मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै पुरस्तान्मिनोति
पुरस्ताद्धि यज्ञस्य प्रज्ञायतेऽप्रज्ञातꣳ हि तद्यदतिपन्न आहुरिदं
कार्यमासीदिति साध्या वै देवा यज्ञमत्यमन्यन्त तान्यज्ञो
नास्पृशत्तान्यद्यज्ञस्यातिरिक्तमासीत्तदस्पृशदतिरिक्तं वा एतद्यज्ञस्य
यदग्नावग्निम्मथित्वा प्रहरत्यतिरिक्तमेतद्यूपस्य यदूर्ध्वं चषालात्तेषां
तद्भागधेयं तानेव तेन प्रीणाति देवा वै सꣳस्थिते सोमे प्र स्रुचोहरन्प्र यूपं
तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरꣳ स्रुचां
निष्क्रयणमपश्यन्त्स्वरुं यूपस्य सꣳस्थिते सोमे प्र प्रस्तरꣳ हरति जुहोति
स्वरुमयज्ञवेशसाय ॥४॥

साध्या वै देवा अस्मिँल्लोक आसन्नान्यत्किं चन मिषत्तेऽग्निमेवाग्नये
मेधायालभन्त न ह्यन्यदालम्भ्यमविन्दन्ततो वा इमाः प्रजाः प्राजायन्त
यदग्नावग्निम्मथित्वा प्रहरति प्रजानाम्प्रजननाय रुद्रो वा एष
यदग्निर्यजमानः पशुर्यत्पशुमालभ्याग्निम्मन्थेद्रुद्राय यजमानमपि
दध्यात्प्रमायुकः स्या दथो खल्वाहुरग्निः सर्वा देवता हविरेतद्यत्पशुरिति
यत्पशुमालभ्याग्निम्मन्थति हव्यायैवासन्नाय सर्वा देवता
जनयत्यु पाकृत्यैव मन्थ्यस्तन्नेवालब्धं
नेवानालब्ध मग्नेर्जनित्रमसीत्याहाग्नेर्ह्येतज्जनित्रं वृषणौ स्थ इत्याह वृषणौ
ह्येता वुर्वश्यस्यायुरसीत्याह मिथुनत्वाय घृतेनाक्ते वृषणं दधाथामित्याह
वृषणꣳ ह्येते दधाते ये अग्निं गायत्रं छन्दोऽनु प्र जायस्वेत्याह
च्छन्दोभिरेवैनम्प्र जनयत्य ग्नये मथ्यमानायानु ब्रूहीत्याह

सावित्रीमृचमन्वाह सवितृप्रसूत एवैनम्मन्थति जातायानु ब्रूहि प्रह्रियमाणायानु ब्रूहीत्याह काण्डेकाण्ड एवैनं क्रियमाणे समर्धयति गायत्रीः सर्वा अन्वाह गायत्रच्छन्दा वा अग्निः स्वेनैवैनं छन्दसा समर्धयत्य॒ग्निः पुरा भवत्यग्निम्मथित्वा प्र हरति तौ सम्भवन्तौ यजमानमभि सम्भवतो भवतं नः समनसावित्याह शान्त्यै प्रहृत्य जुहोति जातायैवास्मा अन्नमपि दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा ॥५॥

इषे त्वेति बर्हिरा दत्त इच्छत इव ह्येष यो यजत उपवीरसीत्याहोप ह्येनानाकरोत्यु॒पो देवान्दैवीर्विशः प्रागुरित्याह दैवीर्ह्येता विशः सतीर्देवानुपयन्ति वह्नीरुशिज इत्याहर्त्विजो वै वह्नय उशिजस्तस्मादेवमाह बृहस्पते धारया वसूनीत्याह ब्रह्म वै देवानाम्बृहस्पतिर्ब्रह्मणैवास्मै पशूनव रुन्द्धे हव्या ते स्वदन्तामित्याह स्वदयत्येवैनान्देव त्वष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनाम्मिथुनानाँ रूपकृद्रूपमेव पशुषु दधाति रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवास्मै रमयति देवस्य त्वा सवितुः प्रसव इति रशनामा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तम्पूष्णो हस्ताभ्यामित्याह यत्या ऋतस्य त्वा देवहविः पाशेना रभ इत्याह सत्यं वा ऋतँ सत्येनैवैनमृतेना रभतेऽक्ष्णया परि हरति वध्यँ हि प्रत्यञ्चम्प्रतिमुञ्चन्ति व्यावृत्त्यै धर्षा मानुषानिति नि युनक्ति धृत्या अद्भ्यस्त्वौषधीभ्यःप्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः सम्भवति यत्पशु॒रपाम्पेरुरसीत्याहैष ह्यपाम्पाता यो मेधायारभ्यते स्वात्तं चित्सदेवँ हव्यमापो देवीः स्वदतैनमित्याह

स्वदयत्येवैन मुपरिष्टात्प्रोक्षत्युपरिष्टादेवैनम्मेध्यं करोति पाययत्यन्तरत
एवैनम्मेध्यं करोत्यधस्तादुपोक्षति सर्वत एवैनम्मेध्यं करोति ॥६॥

अग्निना वै होत्रा देवा असुरानभ्यभवन्नग्नये समिध्यमानायानु ब्रूहीत्याह
भ्रातृव्याभिभूत्यै सप्तदश सामिधेनीरन्वाह सप्तदशः प्रजापतिः
प्रजापतेराप्त्यै सप्तदशान्वाह द्वादश मासाः पञ्चर्तवः स संवत्सरः
संवत्सरम्प्रजा अनु प्र जायन्ते प्रजानाम्प्रजननाय देवा वै सामिधेनीरनूच्य
यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमाऽघारयत्ततो वै देवा
यज्ञमन्वपश्यन्यत्तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्या असुरेषु वै यज्ञ
आसीत्तं देवास्तूष्णीँ होमेनावृञ्जत यत्तूष्णीमाघारमाघारयति भ्रातृव्यस्यैव
तद्यज्ञं वृङ्क्ते परिधीन्त्सम्मार्ष्टि पुनात्येवैनान्त्रिस्त्रिः सम्मार्ष्टि त्र्यावृद्धि
यज्ञोऽथो रक्षसामपहत्यै द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः
संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य
समष्ट्यै शिरो वा एतद्यज्ञस्य यदाघारोऽग्निः सर्वा देवता
यदाघारमाघारयति शीर्षत एव यज्ञस्य यजमानः सर्वा देवता अव रुन्द्धे
शिरो वा एतद्यज्ञस्य यदाघार आत्मा पशुराघारमाघार्य
पशुँसमनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधाति सं ते प्राणो वायुना
गच्छतामित्याह वायुदेवत्यो वै प्राणो वायावेवास्य प्राणं जुहोति सं
यजत्रैरङ्गानि सं यज्ञपतिराशिषेत्याह यज्ञपतिमेवास्याशिषं गमयति
विश्वरूपो वै त्वाष्ट्र उपरिष्टात्पशुमभ्यवमीत्तस्मादुपरिष्टात्पशोर्नाव द्यन्ति
यदुपरिष्टात्पशुँ समनक्ति मेध्यमेवैनं करोत्यृ त्विजो वृणीते
छन्दाँस्येव वृणीते सप्त वृणीते सप्त ग्राम्याः पशवः सप्तारण्याः सप्त
च्छन्दाँस्युभयस्यावरुद्ध्या एकादश प्रयाजान्यजति दश वै पशोः प्राणा

आत्मैकादशो यावानेव पशुस्तम्प्र यजति वपामेकः परि शय आत्मैवात्मानम्परि शये वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्घृतेनाक्तौ पशुं त्रायेथामित्याह वज्रेणैवैनं वशे कृत्वालभते ॥७॥

पर्यग्नि करोति सर्वहुतमेवैनं करोत्यस्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य स्कन्दति त्रिः पर्यग्नि करोति त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३र्नान्वारभ्या३ इति मृत्यवे वा एष नीयते यत्पशुस्तम्यदन्वारभेत प्रमायुको यजमानः स्या दथो खल्वाहुः सुवर्गाय वा एष लोकाय नीयते यत्पशुरिति यन्नान्वारभेत सुवर्गाल्लोकाद्यजमानो हीयेत वपाश्रपणीभ्यामन्वारभते तन्नेवान्वारब्धं नेवानन्वारब्ध मुप प्रेष्य होतर्हव्या देवेभ्य इत्याहेषितꣳ हि कर्म क्रियते रेवतीर्यज्ञपतिं प्रियधा विशतेत्याह यथायजुरेवैत दग्निना पुरस्तादेति रक्षसामपहत्यै पृथिव्याः संपृचः पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्नꣳ हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति पराङा वर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्पशुभ्य एव तन्नि ह्नुत आत्मनोनाव्रस्काय गच्छति श्रियम्प्र पशूनाप्नोति य एवं वेद पश्चाल्लोका वा एषा प्राच्युदानीयते यत्पत्नी नमस्त आतानेत्याहादित्यस्य वै रश्मयः आतानास्तेभ्य एव नमस्करोत्य नर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्याहाशिषमेवैतामा शास्त आपो देवीः शुद्धायुव इत्याह यथायजुरेवैतत् ॥८॥

पशोर्वा आलब्धस्य प्राणाञ्छुगृच्छति वाक्त आ प्यायताम्प्राणस्त आ

प्यायतामित्याह प्राणेभ्य एवास्य शुचँ शमयति सा प्राणेभ्योऽधि
पृथिवीँ शुक्प्र विशति शमहोभ्यामिति नि नयत्यहोरात्राभ्यामेव
पृथिव्यै शुचँ शमयत्यो षधे त्रायस्वैनँ स्वधिते मैनँ हिँसीरित्याह
वज्रो वै स्वधितिः शान्त्यै पार्श्वत आ च्छ्यति मध्यतो हि मनुष्या
आच्छ्यन्ति तिरश्चीनमा च्छ्यत्यनूचीनँ हि मनुष्या आच्छ्यन्ति
व्यावृत्त्यै रक्षसाम्भागोऽसीति स्थविमतो बर्हिरक्त्वापास्यत्यस्नैव
रक्षाँसि निरवदयत इदमहँ रक्षोऽधमं तमो नयामि योऽस्मान्द्वेष्टि यं च
वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तावुभावधमं
तमो नयती षे त्वेति वपामुत्खिदतीच्छत इव ह्येष यो यजते
यदुपतृन्द्याद्रुद्रोऽस्य पशून्घातुकः स्याद्यन्नोपतृन्द्यादयता
स्या दन्ययोपतृणत्त्यन्यया न धृत्यै घृतेन द्यावापृथिवी प्रोर्णुवाथामित्याह
द्यावापृथिवी एव रसेनानक्त्य च्छिन्नो रायः सुवीर इत्याह
यथायजुरेवैतत्क्रूरमिव वा एतत्करोति
यद्वपामुत्खिदत्युर्वन्तरिक्षमन्विहीत्याह शान्त्यै प्र वा
एषोऽस्माल्लोकाच्च्यवते यः पशुम्मृत्यवे नीयमानमन्वारभते वपाश्रपणी
पुनरन्वारभतेऽस्मिन्नेव लोके प्रति तिष्ठत्य ग्निना पुरस्तादेति
रक्षसामपहत्या अथो देवता एव हव्येनान्वेति नान्तममङ्गारमति
हरेद्यदन्तममङ्गारमतिहरेद्देवता अति मन्येत वायो वीहि स्तोकानामित्याह
तस्माद्विभक्ताः स्तोका अव पद्यन्तेऽग्रं वा एतत्पशूनां
यद्वपाग्रमोषधीनाम्बर्हिरग्रेणैवाग्रँ समर्धयत्यथो ओषधीष्वेव पशून्प्रति
ष्ठापयति स्वाहाकृतीभ्यः प्रेष्येत्याह यज्ञस्य समिष्ट्यै प्राणापानौ वा एतौ
पशूनां यत्पृषदाज्यमात्मा वपा पृषदाज्यमभिघार्य वपामभि
घारयत्यात्मन्नेव पशूनाम्प्राणापानौ दधाति स्वाहोर्ध्वनभसम्मारुतं

गच्छतमित्याहोर्ध्वनभा ह स्म वै मारुतो देवानां वपाश्रपणी प्र हरति तेनैवैने प्र हरति विषूची प्र हरति तस्माद्विष्वञ्चौ प्राणापानौ ॥६॥

पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमा लभते वपया प्रचर्य पुरोडाशेन प्र चरत्यूर्ग्वै पुरोडाश ऊर्जमेव पशूनाम्मध्यतो दधात्यथो पशोरेव च्छिद्रमपि दधाति पृषदाज्यस्योपहत्य त्रिः पृच्छति शृतँ हवी३ः शमितरिति त्रिषत्या हि देवा योऽशृतँ शृतमाह स एनसा प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यम्पशोः खलु वा आलब्धस्य हृदयमात्माभि समेति यत्पृषदाज्येन हृदयमभिघारयत्यात्मन्नेव पशूनाम्प्राणापानौ दधाति पशुना वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति तस्य शिरश्छित्त्वा मेधम्प्राक्षारयन्त्स प्रक्षोऽभवत्तत्प्रक्षस्य प्रक्षत्वं यत्प्लक्षशाखोत्तरबर्हिर्भवति समेधस्यैव पशोरव द्यति पशुं वै ह्रियमाणँ रक्षाँस्यनु सचन्तेऽन्तरा यूपं चाहवनीयं च हरति रक्षसामपहत्यै पशोर्वा आलब्धस्य मनोप क्रामति मनोतायै हविषोऽवदीयमानस्यानु ब्रूहीत्याह मन एवास्याव रुन्द्ध एकादशावदानान्यव द्यति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तस्याव द्यति हृदयस्याग्रेऽव द्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाभि गच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधि निर्वदत्येतद्वै पशोर्यथापूर्वं यस्यैवमवदाय यथाकाममुत्तरेषामवद्यति यथापूर्वमेवास्य पशोरवत्तम्भवति मध्यतो गुदस्याव द्यति मध्यतो हि प्राण उत्तमस्याव द्यत्युत्तमो हि प्राणो यदीतरं यदीतरमुभयमेवाजामि जायमानो वै ब्राह्मणस्त्रिभिरृणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवाव दयते तदवदानानामवदानत्वं

देवासुराः संयत्ता आसन्ते देवा अग्निमब्रुवन्त्वया वीरेणासुरानभि
भवामेति सोऽब्रवीद्वरं वृणै पशोरुद्धारमुद्धरा इति स एतमुद्धारमुदहरत
दोः पूर्वार्धस्य गुदम्मध्यतः श्रोणिं जघनार्धस्य ततो देवा अभवन्परासुरा
यत्त्र्यङ्गाणाँ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो
भवत्यक्ष्णयाव द्यति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै
॥१०॥

मेदसा स्रुचौ प्रोर्णोति मेदोरूपा वै पशवो रूपमेव पशुषु दधाति
यूषन्नवधाय प्रोर्णोति रसो वा एष पशूनां यद्यू रसमेव पशुषु दधाति
पार्श्वेन वसाहोमम्प्र यौति मध्यं वा एतत्पशूनां यत्पार्श्वँ रस एष पशूनां
यद्वसा यत्पार्श्वेन वसाहोमम्प्रयौति मध्यत एव पशूनाँ रसं दधाति घ्नन्ति
वा एतत्पशुं यत्संज्ञपयन्त्यैन्द्रः खलु वै देवतया प्राण ऐन्द्रोऽपान ऐन्द्रः
प्राणो अङ्गेअङ्गे नि देध्यदित्याह प्राणापानावेव पशुषु दधाति देव
त्वष्टर्भूरि ते सँ समेत्वित्याह त्वाष्ट्रा हि देवतया पशवो विषुरूपा
यत्सलक्ष्माणो भवथेत्याह विषुरूपा ह्येते सन्तः सलक्ष्माण एतर्हि भवन्ति
देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो
मदन्त्वित्याहानुमतमेवैनम्मात्रा पित्रा सुवर्गं लोकं गमयत्यर्धर्चे
वसाहोमं जुहोत्यसौ वा अर्धर्च इयमर्धच इमे एव रसेनानक्ति दिशो
जुहोति दिश एव रसेनानक्त्यथो दिग्भ्य एवोर्जँ रसमव रुन्द्धे
प्राणापानौ वा एतौ पशूनां यत्पृषदाज्यं वानस्पत्याः खलु वै देवतया
पशवो यत्पृषदाज्यस्योपहत्याह वनस्पतयेऽनु ब्रूहि वनस्पतये प्रेष्येति
प्राणापानावेव पशुषु दधात्यन्यस्यान्यस्य समवत्तँ समवद्यति
तस्मान्नानारूपाः पशवो यूष्णोप सिञ्चति रसो वा एष पशूनां यद्यू रसमेव

पशुषु दधाती डामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवो यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवैनम्पशुभ्यो निर्भजत्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति मेदस्वत्तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवास्मै पशूनव रुन्द्धे पशुमानेव भवति प्रजापतिर्यज्ञमसृजत स आज्यं पुरस्तादसृजत पशुम्मध्यतः पृषदाज्यम्पश्चात्तस्मादाज्येन प्रयाजा इज्यन्ते पशुना मध्यतः पृषदाज्येनानूयाजास्तस्मादेतन्मिश्रमिव पश्चात्सृष्टꣳ ह्येकादशानूयाजान्यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तमनु यजति घ्नन्ति वा एतत्पशुं यत्संज्ञपयन्ति प्राणापानौ खलु वा एतौ पशूनां यत्पृषदाज्यं यत्पृषदाज्येनानूयाजान्यजति प्राणापानावेव पशुषु दधाति ॥११॥

इति षष्ठकाण्डे तृतीयः प्रपाठकः ३

## अथ षष्ठकाण्डे चतुर्थः प्रपाठकः ४

यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भिरेवासृजत यदुपयज उपयजति प्रजा एव तद्यजमानः सृजते जघनार्धादव द्यति जघनार्धाद्धि प्रजाः प्रजायन्ते स्थविमतोऽव द्यति स्थविमतो हि प्रजाः प्रजायन्तेऽसम्भिन्दन्नव द्यति प्राणानामसम्भेदाय न पर्यावर्तयति यत्पर्यावर्तयेदुदावर्तः प्रजा ग्राहुकः स्यात्समुद्रं गच्छ स्वाहेत्याह रेत एव तद्दधात्य न्तरिक्षं गच्छ स्वाहेत्याहान्तरिक्षेणैवास्मै प्रजाः प्र जनयत्यन्तरिक्षꣳ ह्यनु प्रजाः प्रजायन्ते देवꣳ सवितारं गच्छ स्वाहेत्याह सवितृप्रसूत एवास्मै प्रजाः प्र जनयत्य होरात्रे गच्छ स्वाहेत्याहाहोरात्राभ्यामेवास्मै प्रजाः प्र जनयत्यहोरात्रे ह्यनु प्रजाः

प्रजायन्ते मित्रावरुणौ गच्छ स्वाहेत्याह प्रजास्वेव प्रजातासु प्राणापानौ दधाति सोमं गच्छ स्वाहेत्याह सौम्या हि देवतया प्रजा यज्ञं गच्छ स्वाहेत्याह प्रजा एव यज्ञियाः करोति च्छन्दाँसि गच्छ स्वाहेत्याह पशवो वै छन्दाँसि पशूनेवाव रुन्द्धे द्यावापृथिवी गच्छ स्वाहेत्याह प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति नभो दिव्यं गच्छ स्वाहेत्याह प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नि यच्छत्यग्निं वैश्वानरं गच्छ स्वाहेत्याह प्रजा एव प्रजाता अस्याम्प्रति ष्ठापयति प्राणानां वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे हार्दि यच्छेत्याह प्राणानेव यथास्थानमुप ह्वयते पशोर्वा आलब्धस्य हृदयँ शुगृच्छति सा हृदयशूलमभि समेति यत्पृथिव्याँ हृदयशूलमुद्वासयेत्पृथिवीँ शुचार्पयेद्यदप्स्वपः शुचार्पयेच्छुष्कस्य चार्द्रस्य च संधावुद्वासयत्युभयस्य शान्त्यै यं द्विष्यात्तं ध्यायेच्छुचैवैनमर्पयति ॥१॥

देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्यशिष्यत तदब्रुवन्वसतु नु न इदमिति तद्वसतीवरीणां वसतीवरित्वं तस्मिन्प्रातर्न समशक्नुवन्तदप्सु प्रावेशयन्ता वसतीवरीरभवन्वसतीवरीर्गृह्णाति यज्ञो वै वसतीवरीर्यज्ञमेवारभ्य गृहीत्वोप वसति यस्यागृहीता अभि निम्रोचेदनारब्धोऽस्य यज्ञः स्याद्यज्ञं वि च्छिन्द्याज्ज्योतिष्यां वा गृह्णीयाद्धिरण्यं वावधाय सशुक्राणामेव गृह्णाति यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात्स हि गृहीतवसतीवरीको वसतीवरीर्गृह्णाति पशवो वै वसतीवरीः पशूनेवारभ्य गृहीत्वोप वसति यदन्वीपं तिष्ठन्गृह्णीयान्निर्मार्गुका अस्मात्पशवः स्युः प्रतीपं तिष्ठन्गृह्णाति प्रतिरुध्यैवास्मै पशून्गृह्णातीन्द्रो वृत्रमहन्त्सो१ऽपो२ऽभ्यम्रियत तासां

यन्मेध्यं यज्ञियꣳ सदेवमासीत्तदत्यमुच्यत ता वहन्तीरभवन्वहन्तीनां गृह्णाति या एव मेध्या यज्ञियाः सदेवा आपस्तासामेव गृह्णाति नान्तमा वहन्तीरतीयाद्यदन्तमा वहन्तीरतीयाद्यज्ञमति मन्येत न स्थावराणां गृह्णीयाद्वरुणगृहीता वै स्थावरा यत्स्थावराणां गृह्णीया द्वरुणेनास्य यज्ञं ग्राहये द्यद्वै दिवा भवत्यपो रात्रिः प्र विशति तस्मात्ताम्रा आपो दिवा ददृश्रे यन्नक्तम्भवत्यपोऽहः प्र विशति तस्माच्चन्द्रा आपो नक्तं ददृश्रे छायायै चातपतश्च संधौ गृह्णात्यहोरात्रयोरेवास्मै वर्णं गृह्णाति हविष्मतीरिमा आप इत्याह हविष्कृतानामेव गृह्णाति हविष्माꣳ अस्तु सूर्य इत्याह सशुक्राणामेव गृह्णात्य नुष्टुभा गृह्णाति वाग्वा अनुष्टुग्वाचैवैनाः सर्वया गृह्णाति चतुष्पदयर्चा गृह्णाति त्रिः सादयति सप्त सम्पद्यन्ते सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्द्धेऽस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो यद्गार्हपत्य उपसादयेदस्मिꣳल्लोके पशुमान्त्स्याद्यदाहवनीयेऽमुष्मिꣳल्लोके पशुमान्त्स्यादुभयोरुप सादयत्युभयोरेवैनं लोकयोः पशुमन्तं करोति सर्वतः परि हरति रक्षसामपहत्या इन्द्राग्नियोर्भागधेयीः स्थेत्याह यथायजुरेवैत दाग्नीध्र उप वासयत्येतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदेव यज्ञस्यापराजितं तदेवैना उप वासयति यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यद्वहन्तीनां गृह्णाति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय न ह्येता ईलयन्त्या तृतीयसवनात्परि शेरे यज्ञस्य संतत्यै ॥२॥

ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे

त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्य उपावहरति पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक्तामव रुन्द्धेऽपोऽग्रेऽभिव्याहरति यज्ञो वा आपो यज्ञमेवाभि वाचं वि सृजति सर्वाणि च्छन्दाꣳस्यन्वाह पशवो वै छन्दाꣳसि पशूनेवाव रुन्द्धे गायत्रिया तेजस्कामस्य परि दध्यात्त्रिष्टुभेन्द्रियकामस्य जगत्या पशुकामस्यानुष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञकामस्य विराजान्नकामस्य शृणोत्वग्निः समिधा हवं म इत्याह सवितृप्रसूत एव देवताभ्यो निवेद्यापोऽच्छैत्यप इष्य होतरित्याहेषितꣳ हि कर्म क्रियते मैत्रावरुणस्य चमसाध्वर्यवा द्रवेत्याह मित्रावरुणौ वा अपां नेतारौ ताभ्यामेवैना अच्छैति देवीरापो अपां नपादित्याहाहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाभिघृतानां गृह्णाति कार्षिरसीत्याह शमलमेवासामप प्लावयति समुद्रस्य वोक्षित्या उन्नय इत्याह तस्माद्द्यमाना पीयमाना आपो न क्षीयन्ते योनिर्वै यज्ञस्य चात्वालं यज्ञो वसतीवरीर्होतृचमसं च मैत्रावरुणचमसं च सꣳस्पर्श्य वसतीवरीर्व्यानयति यज्ञस्य सयोनित्वायाथो स्वादेवैना योनेः प्र जनयत्यध्वर्योऽवेरपा३ इत्याहोतेमनन्नमुरुतेमाः पश्येति वावैतदाह यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ नि मार्ष्टि यद्यतिरात्रो यजुर्वदन्प्र पद्यते यज्ञक्रतूनां व्यावृत्त्यै ॥३॥

देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै पशवो वै सोमो व्यान उपाꣳशुसवनो यदुपाꣳशुसवनमभि मिमीते व्यानमेव पशुषु दधातीन्द्राय त्वेन्द्राय

त्वेति॑ मिमीत इन्द्रा॑य हि सोम॑ आह्रियते पञ्च कृत्वो यजु॑षा मिमीते
पञ्चा॑क्षरा पङ्क्तिः पाङ्क्तो॑ यज्ञो यज्ञमेवाव॑ रुन्द्धे पञ्च कृत्व॑स्तूष्णीं दश
सम्प॑द्यन्ते दशा॑क्षरा विराडन्नं॑विराड्विराजै॑वान्नाद्यमव॑ रुन्द्धे श्वात्राः स्थ॑
वृत्रतुर इत्या॑हैष वा अपा॑ँ सोमपीथो य एवं वेद नाप्स्वार्ति॑मार्च्छ॑ति यत्ते॑
सोम दिवि ज्योति॑रित्या॑हैभ्य एवैनं॑ लोकेभ्यः सम्भ॑रति सोमो वै राजा
दिशो॑ऽभ्य॑ध्यायत्स दिशोऽनु प्रावि॑शत्प्रागपागुद॑गधरागित्या॑ह दिग्भ्य
एवैन॑ँ सम्भ॑रत्यथो दिश॑ एवास्मा अव॑ रुन्द्धेऽम्ब नि ष्वरेत्या॑ह कामु॑का
एन॑ँ स्त्रियो॑ भवन्ति य एवं वेद यत्ते॑ सोमादा॑भ्यं नाम जागृवीत्या॑हैष वै
सोम॑स्य सोमपीथो य एवं वेद न सौम्यामार्ति॑मार्च्छ॑ति घ्नन्ति वा एतत्सोमं
यद॑भिषुण्वन्त्य॑ँशूनप॑ गृह्णाति त्राय॑त एवैनं॑ प्राणा वा अ॑ँशव॑ः पशवः
सोमो॑ऽ॑ँशून्पुनरपि॑ सृजति प्राणानेव पशुषु॑ दधाति द्वौद्वावपि॑ सृजति
तस्माद्द्वौद्वौ॑ प्राणाः ॥४॥

प्राणो वा एष यदु॑पा॑ँशुर्यदु॑पा॑ँश्वग्रा ग्रहा॑ गृह्यन्ते॑ प्राणमेवानु प्र
य॑न्त्यरुणो ह॑ स्माहौप॑वेशिः प्रातःसवन एवाहं यज्ञ॑ँ स॑ँ स्था॑पयामि
तेन ततः स॑ँस्थि॑तेन चरामीत्यष्टौ कृतोऽग्रेऽभि षु॑णोत्यष्टाक्ष॑रा गायत्री
गा॑यत्रम्प्रा॑तःसवनं प्रा॑तःसवनमेव तेना॑प्नोत्येका॑दश कृत्वो॑
द्वितीयमेका॑दशाक्षरा त्रिष्टुप्त्रैष्टु॑भम्माध्यं॑दिन॑ँ सव॑नं माध्यं॑दिनमेव सव॑नं
तेना॑प्नोति द्वाद॑श कृत्व॑स्तृतीयं द्वाद॑शाक्षरा जग॑ती जाग॑तं तृतीयसवनं
तृ॑तीयसवनमेव तेना॑प्नोत्येता॑ँ ह वाव स यज्ञस्य
स॑ँस्थि॑तिमुवाचास्क॑न्दायास्क॑न्न॑ँ हि तद्यद्यज्ञस्य स॑ँस्थि॑तस्य
स्कन्दत्यथो खल्वा॑हुर्गा॑यत्री वाव प्रा॑तःसवने नातिवाद इत्यन॑तिवादुक
एनम्भ्रातृ॑व्यो भवति य एवं वेद तस्मा॑दष्टाव॑ष्टौ कृत्वो॑ऽभिषुत्यं॑

ब्रह्मवादिनो वदन्ति पवित्रवन्तोऽन्ये ग्रहा गृह्यन्ते किम्पवित्र उपाँशुरिति वाक्पवित्र इति ब्रूयाद्वाचस्पतये पवस्व वाजिन्नित्याह वाचैवैनम्पवयति वृष्णो अँशुभ्यामित्याह वृष्णो ह्येतावँशू यौ सोमस्य गभस्तिपूत इत्याह गभस्तिना ह्येनम्पवयति देवो देवानाम्पवित्रमसीत्याह देवो ह्येषः सन्देवानाम्पवित्रं येषाम्भागोऽसि तेभ्यस्त्वेत्याह येषाँ ह्येष भागस्तेभ्य एनं गृह्णाति स्वांकृतोऽसीत्याह प्राणमेव स्वमकृत मधुमतीर्न इषस्कृधीत्याह सर्वमेवास्मा इदँ स्वदयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान्दधाति मनस्त्वाष्ट्वित्याह मन एवाश्नुत उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो हि प्राणः स्वाहा त्वा सुभवः सूर्यायेत्याह प्राणा वै स्वभवसो देवास्तेष्वेव परोऽक्षं जुहोति देवेभ्यस्त्वा मरीचिपेभ्य इत्याहादित्यस्य वै रश्मयो देवा मरीचिपास्तेषां तद्भागधेयं तानेव तेन प्रीणाति यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचा हस्तेन नि मृज्याद्वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्युत्तानेन नि मृज्याद्वृष्टिमेवोद्यच्छति यद्यभिचरेदमुं जह्यथ त्वा होष्यामीति ब्रूयादाहुतिमेवैनम्प्रेप्सन्हन्ति यदि दूरे स्यादा तमितोस्तिष्ठेत्प्राणमेवास्यानुगत्य हन्ति यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सादयेदसन्नो वै प्राणः प्राणमेवास्य सादयति षड्भिरँशुभिः पवयति षड्वा ऋतव ऋतुभिरेवैनम्पवयति त्रिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति ब्रह्मवादिनो वदन्ति कस्मात्सत्यात्त्रयः पशूनाँ हस्तादाना इति यत्त्रिरुपाँशुँ हस्तेन विगृह्णाति तस्मात्त्रयः पशूनाँ हस्तादानाः पुरुषो हस्ती मर्कटः ॥५॥

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपाँशौ यज्ञँ

सꣳस्थाप्यमपश्यन्तमुपाꣳशौ समस्थापयन्तेऽसुरा वज्रमुद्यत्य देवानभ्यायन्त ते देवा बिभ्यत इन्द्रमुपाधावन्तानिन्द्रोऽन्तर्यामेणान्तरधत्त तदन्तर्यामस्यान्तर्यामत्वं यदन्तर्यामो गृह्यते भ्रातृव्यानेव तद्यजमानोऽन्तर्धत्तेऽन्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षमित्याहैभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते ते देवा अमन्यन्तेन्द्रो वा इदमभूद्यद्वयꣳ स्म इति तेऽब्रुवन्मघवन्ननु न आ भजेति सजोषा देवैरवरैः परैश्चेत्यब्रवीद्ये चैव देवाः परे य चावरे तानुभयानन्वाभजत्सजोषा देवैरवरैः परैश्चेत्याह ये चैव देवाः परे ये चावरे तानुभयानन्वाभजत्य न्तर्यामे मघवन्मादयस्वेत्याह यज्ञादेव यजमानं नान्तरैत्यु पयामगृहीतोऽसीत्याहापानस्य धृत्यै यदुभावपवित्रौ गृह्येयाताम्प्राणमपानोऽनु न्यृच्छेत्प्रमायुकः स्यात्पवित्रवानन्तर्यामो गृह्यते प्राणापानयोर्विधृत्यै प्राणापानौ वा एतौ यदुपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यं कामयेत प्रमायुकः स्यादित्यसꣳस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ वि च्छिनत्ति ताजक्प्र मीयते यं कामयेत सर्वमायुरियादिति सꣳस्पृष्टौ तस्य सादये द्व्यानेनैवास्य प्राणापानौ सं तनोति सर्वमायुरेति ॥६॥

वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्र यन्ति वायुं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मदग्रा एव वो ग्रहा गृह्यान्ता इति तस्मादैन्द्रवायवाग्रा ग्रहा गृह्यन्ते तमघ्न न्त्सोऽपूयत्तं देवा नोपाधृष्णुवन्ते वायुमब्रुवन्निमं नः स्वदयेति सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते तमेभ्यो

वायुरेवास्वदयत्तस्माद्यत्पूयति तत्प्रवाते वि षंजन्ति वायुर्हि तस्य पवयिता स्वदयिता तस्य विग्रहंणं नाविन्दन्सादितिरब्रवीद्वरं वृणा अथ मया वि गृह्णीध्वम्मद्देवत्या एव वः सोमाः सन्ना असन्निर्युपयामगृहीतोऽसीत्याहादितिदेवत्यास्तेन यानि हि दारुमयाणि पात्राण्यस्यैतानि योनेः सम्भूतानि यानि मृन्मयानि साक्षात्तान्यस्यै तस्मादेवमाहु वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते तस्मात्सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे द्वौ हि स वरावर्वृणीत ॥७॥

मित्रं देवा अब्रुवन्त्सोम॑ँ राजान॑ँ हनामेति सोऽब्रवीन्नाह॑ँ सर्वस्य वा अहम्मित्रमस्मीति तमब्रुवन्हनामैवेति सोऽब्रवीद्वरं वृणै पयसैव मे सोम॑ँ श्रीणन्निति तस्मान्मैत्रावरुणम्पयसा श्रीणन्ति तस्मात्पशवोऽपाक्रामन्मित्रः सन्क्रूरमकरिति क्रूरमिव खलु वा एषः करोति यः सोमेन यजते तस्मात्पशवोऽप क्रामन्ति यन्मैत्रावरुणम्पयसा श्रीणाति पशुभिरेव तन्मित्र॑ँ समर्धयति पशुभिर्यजमानं पुरा खलु वावैवम्मित्रोऽवेदप मत्क्रूरं चक्रुषः पशवः क्रमिष्यन्तीति तस्मादेवमवृणीत वरुणं देवा अब्रुवन्त्वया॑ँशभुवा सोम॑ँ राजान॑ँ हनामेति सोऽब्रवीद्वरं वृणै मह्यं चैवैष मित्राय च सह गृह्याता इति तस्मान्मैत्रावरुणः सह गृह्यते तस्माद्राज्ञा राजानम॑ँशभुवा घ्नन्ति वैश्येन वैश्य॑ँ शूद्रेण शुद्रं न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन्निदं नो वि वासयतमिति तावब्रूतां वरं वृणावहा एक एवावत्पूर्वो ग्रहो गृह्याता इति

तस्मादैन्द्रवायवः पूर्वो मैत्रावरुणाद्गृह्यते प्राणापानौ ह्येतौ यदुपा ँ॒श्वन्तर्यामौ मित्रोऽहरजनयद्वरुणो रात्रिं ततो वा इदं व्यौच्छ्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै ॥८॥

यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रति धत्तमिति तावब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृह्यतामिति ताभ्यामेतमाश्विनमगृह्णन्ततो वै तौ यज्ञस्य शिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ भिषजाविति तस्माद्ब्राह्मणेन भेषजं न कार्यमपूतो ह्येऽषोऽमेध्यो यो भिषक्तौ बहिषवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन्तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते तस्मादेवं विदुषा बहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पवयते तयोस्त्रेधा भैषज्यं वि न्यदधुरग्नौ तृतीयमप्सु तृतीयं ब्राह्मणे तृतीयं तस्मादुदपात्रमुपनिधाय ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्याद्यावदेव भेषजं तेन करोति समर्धुकमस्य कृतम्भवति ब्रह्मवादिनो वदन्ति कस्मात्सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते द्विपात्रा हूयन्त इति यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्माद्द्वौद्वौ बहिष्टात्प्राणाः प्राणा वा एते यद्द्विदेवत्याः पशव इडा यदिडाम्पूर्वां द्विदेवत्येभ्य उपह्वयेत पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद्द्विदेवत्यान्भक्षयित्वेडामुप ह्वयते प्राणानेवात्मन्धित्वा पशूनुप ह्वयते वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवम्भक्षयति तस्मात्पुरस्ताद्वाचा वदति पुरस्तान्मैत्रावरुणं तस्मात्पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात्सर्वत ः श्रोत्रेण शृणोति प्राणा वा एते

यद्द्विदेवत्या अरिक्तानि पात्राणि सादयति तस्मादरिक्ता अन्तरतः प्राणा यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यदरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयति वाच्येव वाचं दधात्या तृतीयसवनात्परि शेरे यज्ञस्य संतत्यै ॥६॥

बृहस्पतिर्देवानाम्पुरोहित आसीच्छण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा आसन्ब्रह्मण्वन्तोऽसुरास्ते२ऽन्योऽन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्कावुपामन्त्रयन्त तावब्रूतां वरं वृणावहै ग्रहावेव नावत्रापि गृह्येतामिति ताभ्यामेतौ शुक्रामन्थिनावगृह्णन्ततो देवा अभवन्परासुरा यस्यैवं विदुषः शुक्रामन्थिनौ गृह्येते भवत्यात्मना परास्य भ्रातृव्यो भवति तौ देवा अपनुद्यात्मन इन्द्रायाजुहवुरपनुत्तौ शण्डामर्कौ सहामुनेति ब्रूयाद्यं द्विष्याद्यमेव द्वेष्टि तेनैनौ सहाप नुदते स प्रथमः संकृतिर्विश्वकर्मेत्येवैनावात्मन इन्द्रायाजुहवुरिन्द्रो ह्येतानि रूपाणि करिक्रदचरदसौ वा आदित्यः शुक्रश्चन्द्रमा मन्थ्यपिगृह्य प्राञ्चौ निष्क्रामतस्तस्मात्प्राञ्चौ यन्तौ न पश्यन्ति प्रत्यञ्चावावृत्य जुहुतस्मात्प्रत्यञ्चौ यन्तौ पश्यन्ति चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ नासिकोत्तरवेदिरभितः परिक्रम्य जुहुतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते सर्वतः परि क्रामतो रक्षसामपहत्यै देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभिः प्राणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन्ताꣳस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान्प्र णुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते शुक्रामन्थिनौ वा

अनु प्रजाः प्र जायन्तेऽत्त्रीश्चाद्याश्च सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषा सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेत्याहैता वै सुवीरा या अत्त्रीरेताः सुप्रजा या आद्या य एवं वेदात्त्यस्य प्रजा जायते नाद्या प्रजापतेरक्ष्यश्वयत्तत्परापतत्तद्विकङ्कतम्प्राविशत्तद्विकङ्कते नारमत तद्यवम्प्राविशत्तद्यवेऽरमत तद्यवस्य यवत्वं यद्वैकङ्कतम्मन्थिपात्रम्भवति सक्तुभिः श्रीणाति प्रजापतेरेव तच्चक्षुः सम्भरति ब्रह्मवादिनो वदन्ति कस्मात्सत्यान्मन्थिपात्रँ सदो नाश्नुत इत्यार्तपात्रँ हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युः स्यादार्तिमार्च्छेत्तस्मान्नाश्नुते ॥१०॥

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा आग्रयणाग्रान्ग्रहानपश्यन्तानगृह्णत ततो वै तेऽग्रम्पर्यायन्यस्यैवं विदुष आग्रयणाग्रा ग्रहा गृह्यन्तेऽग्रमेव समानानाम्पर्यैति रुग्णवत्यर्चा भ्रातृव्यवतो गृह्णीयाद्भ्रातृव्यस्यैव रुक्त्वाग्रँ समानानाम्पर्यैति ये देवा दिव्येकादश स्थेत्याहैतावतीर्वै देवतास्ताभ्य एवैनँ सर्वाभ्यो गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष देवतया वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना ते देवा वाच्यपक्रान्तायां तूष्णीं ग्रहानगृह्णत सामन्यत वागन्तर्यन्ति वै मेति साग्रयणम्प्रत्यागच्छत्तदाग्रयणस्याग्रयणत्वं तस्मादाग्रयणे वाग्वि सृज्यते यत्तूष्णीम्पूर्वे ग्रहा गृह्यन्ते यथा त्सारीयति म आख इयति नाप रात्स्यामीत्युपावसृजत्येवमेव तदध्वर्युराग्रयणं गृहीत्वा यज्ञमारभ्य वाचं वि सृजते त्रिर्हिं करोत्युद्गातृनेव तद्वृणीते प्रजापतिर्वा एष यदाग्रयणो यदाग्रयणं गृहीत्वा हिं करोति प्रजापतिरेव तत्प्रजा अभि जिघ्रति

तस्माद्वत्सं जातं गौरभि जिंघ्रत्यात्मा वा एष यज्ञस्य यदाग्रयणः सवनेसवनेऽभि गृह्णात्यात्मन्नेव यज्ञꣳ सं तनोत्युपरिष्टादा नयति रेत एव तद्दधात्यधस्तादुप गृह्णाति प्र जनयत्येव तद्ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्गायत्री कनिष्ठा च्छन्दसाꣳ सती सर्वाणि सवनानि वहतीत्येष वै गायत्रियै वत्सो यदाग्रयणस्तमेव तदभिनिवर्तꣳ सर्वाणि सवनानि वहति तस्माद्वत्समुपाकृतं गौरभि नि वर्तते ॥११॥

इति षष्ठकाण्डे चतुर्थः प्रपाठकः ४

अथ षष्ठकाण्डे पञ्चमः प्रपाठकः ५

इन्द्रो वृत्राय वज्रमुदयच्छत्स वृत्रो वज्रादुद्यतादबिभेत्सोऽब्रवीन्मा मे प्र हारस्ति वा इदम्मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यम्प्रायच्छत्तस्मै द्वितीयमुदयच्छत्सोऽब्रवीत्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यमेव प्रायच्छत्तस्मै तृतीयमुदयच्छत्तं विष्णुरन्वतिष्ठत जहीति सोऽब्रवीन्मा मे प्र हारस्ति वा इदम्मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यमेव प्रायच्छत्तं निर्मायम्भूतमहन्यज्ञो हि तस्य मायासीद्यदुक्थ्यो गृह्यत इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्त इन्द्राय त्वा बृहद्वते वयस्वत इत्याहेन्द्राय हि स तम्प्रायच्छत्तस्मै त्वा विष्णवे त्वेत्याह यदेव विष्णुरन्वतिष्ठत जहीति तस्माद्विष्णुमन्वाभजति त्रिर्निर्गृह्णाति त्रिर्हि स तं तस्मै प्रायच्छदेष ते योनिः पुनर्हविरसीत्याह पुनःपुनर्ह्यस्मान्निर्गृह्णाति चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यस्तस्मादुक्थ्यꣳ हुतꣳ सोमा अन्वायन्ति तस्मादात्मा चक्षुरन्वेति तस्मादेकं यन्तम्बहवोऽनु यन्ति तस्मादेको बहूनाम्भद्रो भवति तस्मादेको बह्वीर्जाया विन्दते यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्यन्तराहवनीयं च हविर्धानं च

तिष्ठन्नव नयेदात्मानमेव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा संदोहविधाने तिष्ठन्नव नयेद्यजमानमेव यज्ञयशसेनार्पयति यदि कामयेत सदस्यान्यज्ञयशसेनार्पयेयमिति सद आलभ्याव नयेत्सदस्यानेव यज्ञयशसेनार्पयति ॥१॥

आयुर्वा एतद्यज्ञस्य यद्ध्रुव उत्तमो ग्रहाणां गृह्यते तस्मादायुः प्राणानामुत्तमं मूर्धानं दिवो अरतिम्पृथिव्या इत्याह मूर्धानमेवैनँ समानानां करोति वैश्वानरमृताय जातमग्निमित्याह वैश्वानरँ हि देवतयायु रुभयतोवैश्वानरो गृह्यते तस्मादुभयतः प्राणा अधस्ताच्चोपरिष्टाच्चा र्धिनोऽन्ये ग्रहा गृह्यन्तेऽर्धी ध्रुवस्तस्माद्दर्ध्यवाङ्प्राणोऽन्येषाम्प्राणाना मुपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवस्तस्मादस्थ्नान्याः प्रजाः प्रतितिष्ठन्ति माँसेनान्या असुरा वा उत्तरतः पृथिवीम्पर्याचिकीर्षन्तां देवा ध्रुवेणादृँहन्तद्ध्रुवस्य ध्रुवत्वं यद्ध्रुव उत्तरतः साद्यते धृत्या आयुर्वा एतद्यज्ञस्य यद्ध्रुव आत्मा होता यद्धोतृचमसे ध्रुवमवनयत्यात्मन्नेव यज्ञस्यायुर्दधाति पुरस्ता दुक्थस्यावनीय इत्याहुः पुरस्ताद्ध्यायुषो भुङ्क्ते मध्यतोऽवनीय इत्याहुर्मध्यमेन ह्यायुषो भुङ्क्त उत्तरार्धेऽवनीय इत्याहुरुत्तमेन ह्यायुषो भुङ्क्ते वैश्वदेव्यामृचि शस्यमानायामव नयति वैश्वदेव्यो वै प्रजाः प्रजास्वेवायुर्दधाति ॥२॥

यज्ञेन वै देवाः सुवर्गं लोकमायन्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते संवत्सरेण योपयित्वा सुवर्गं लोकमायन्तमृषय ऋतुग्रहैरेवानु प्राजानन्यदृतुग्रहा गृह्यन्ते सुवर्गस्य लोकस्य प्रज्ञात्यै द्वादश गृह्यन्ते द्वादश

मासाः संवत्सरः संवत्सरस्य प्रज्ञात्यै सह प्रथमौ गृह्येते सहोत्तमौ
तस्माद्द्वौद्वावृतू उभयतोमुखमृतुपात्रम्भवति को हि तद्वेद यत
ऋतूनाम्मुखं मृतुना प्रेष्येति षट्कृत्व आह षड्वा ऋतव ऋतूनेव
प्रीणात्यृतुभिरिति चतुश्चतुष्पद एव पशून्प्रीणाति द्विः पुनर्ऋतुनाह द्विपद
एव प्रीणात्यृ तुना प्रेष्येति षट्कृत्व आहर्तुभिरिति चतुस्तस्माच्चतुष्पादः
पशव ऋतूनुप जीवन्ति द्विः पुनर्ऋतुनाह तस्माद्द्विपादश्चतुष्पदः पशूनुप
जीवन्त्यृ तुना प्रेष्येति षट्कृत्व आहर्तुभिरिति चतुर्द्विः
पुनर्ऋतुनाहाक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै
नान्योऽन्यमनु प्र पद्येत यदन्योऽन्यमनु प्र पद्येतर्तुर्ऋतुमनु प्र पद्येतर्तवो
मोहुकाः स्युः प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्र पद्यते प्रसिद्धम्प्रतिप्रस्थातोत्तरेण
तस्मादादित्यः षण्मासो दक्षिणेनैति षडुत्तरेणो पयामगृहीतोऽसि
सꣳसर्पोऽस्यꣳहस्पत्याय त्वेत्याहास्ति त्रयोदशो मास इत्याहुस्तमेव
तत्प्रीणाति ॥३॥

सुवर्गाय वा एते लोकाय गृह्यन्ते यदृतुग्रहा ज्योतिरिन्द्राग्नी
यदैन्द्राग्नमृतुपात्रेण गृह्णाति ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य
लोकस्यानुख्यात्या ओजोभृतौ वा एतौ देवानां यदिन्द्राग्नी यदैन्द्राग्नो
गृह्यत ओज एवाव रुन्द्धे वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजा
असावादित्यः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति तस्मादसावादित्यः
सर्वाः प्रजाः प्रत्यङ्ङुदेति तस्मात्सर्व एव मन्यते माम्प्रत्युदगादिति
वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजास्तेजः शुक्रो यद्वैश्वदेवꣳ
शुक्रपात्रेण गृह्णाति प्रजास्वेव तेजो दधाति ॥४॥

इन्द्रो मरुद्भिः सांविद्येन माध्यंदिने सवने वृत्रमहन्यन्माध्यंदिने सवने
मरुत्वतीया गृह्यन्ते वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते तस्य वृत्रं जघ्नुष
ऋतवोऽमुह्यन्त्स ऋतुपात्रेण मरुत्वतीयानगृह्णात्ततो वै स
ऋतून्प्राजानाद्यदृतुपात्रेण मरुत्वतीया गृह्यन्त ऋतूनाम्प्रज्ञात्यै वज्रं वा एतं
यजमानो भ्रातृव्याय प्र हरति यन्मरुत्वतीया उदेव प्रथमेन यच्छति प्र
हरति द्वितीयेन स्तृणुते तृतीयेना युधं वा एतद्यजमानः सँस्कुरुते
यन्मरुत्वतीया धनुरेव प्रथमो ज्या द्वितीय इषुस्तृतीयः प्रत्येव प्रथमेन धत्ते
वि सृजति द्वितीयेन विध्यति तृतीयेने न्द्रो वृत्रँ हत्वा
परांपरावतमगच्छदपाराधमिति मन्यमानः स हरितोऽभवत्स
एतान्मरुत्वतीयानात्मस्परणानपश्यत्तानगृह्णीत प्राणमेव
प्रथमेनास्पृणुतापानं द्वितीयेनात्मानं तृतीयेना त्मस्परणा वा एते
यजमानस्य गृह्यन्ते यन्मरुत्वतीयाः प्राणमेव प्रथमेन स्पृणुतेऽपानं
द्वितीयेनात्मानं तृतीयेने न्द्रो वृत्रमहन्तं देवा अब्रुवन्महान्वा अयमभूद्यो
वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वँ स एतम्माहेन्द्रमुद्धारमुदहरत वृत्रँ
हत्वान्यासु देवतास्वधि यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान
उद्धरतेऽन्यासु प्रजास्वधि शुक्रपात्रेण गृह्णाति यजमानदेवत्यो वै
माहेन्द्रस्तेजः शुक्रो यन्माहेन्द्रँ शुक्रपात्रेण गृह्णाति यजमान एव तेजो
दधाति ॥५॥

अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या
उच्छेषणमददुस्तत्प्राश्नात्सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त
सा द्वितीयमपचत्सामन्यतोच्छेषणान्म इमेऽज्ञत यदग्रे प्राशिष्यामीतो मे
वसीयाँसो जनिष्यन्त इति साग्रे प्राश्नात्सा रेतोऽधत्त तस्यै

व्यृंद्धमाण्डमंजायत सादित्येभ्यं एव तृतीयंमपचद्भोगाय म इदँ
श्रान्तमस्त्विति तेंऽब्रुवन्वरं वृणामहै योऽतो जायाता अस्माकँ स
एकोंऽसद्योंऽस्य प्रजायामृध्याता अस्माकम्भोगाय भवादिति ततो
विवंस्वानादित्योंऽजायत तस्य वा इयम्प्रजा यन्मंनुष्यास्तास्वेकं एवर्द्धो
यो यजंते स देवानाम्भोगाय भवति देवा वै यज्ञाद्रुद्रमन्तरायन्त्स
आदित्यानन्वाक्रंमत ते द्विदेवत्यान्प्रापंद्यन्त तान्न प्रति प्रायंच्छन्तस्मादपि
वध्यम्प्रपंन्नं न प्रति प्र यंच्छन्ति तस्मांद्विदेवत्येभ्य आदित्यो निर्गृह्यते
यदुच्छेषंणादजायन्त तस्मादुच्छेषंणाद्गृह्यते तिसृभिंर्ऋग्भिर्गृह्णाति माता
पिता पुत्रस्तदेव तन्मिंथुनमुल्बं गर्भो जरायु तदेव तन्मिंथुनं पशवो वा एते
यदादित्य ऊर्ग्दधिं दध्ना मध्यतः श्रीणात्यूर्जमेव पंशूनाम्मंध्यतो दंधाति
शृतातङ्कचेन मेध्यत्वाय तस्मांदामा पक्वं दुंहे पशवो वा एते यदादित्यः
परिश्रित्यं गृह्णाति प्रतिरुध्यैवास्मै पशून्गृह्णाति पशवो वा एते यदादित्य
एष रुद्रो यदग्निः परिश्रित्यं गृह्णाति रुद्रादेव पशूनन्तर्दधात्येष वै
विवंस्वानादित्यो यदुंपाँशुसवंनः स एतमेव सोमपीथम्परिं शय आ
तृतीयसवनाद्विवंस्व आदित्यैष तें सोमपीथ इत्याह
विवंस्वन्तमेवादित्यँ सोमपीथेन समंर्धयति या दिव्या वृष्टिस्तया त्वा
श्रीणामीति वृष्टिंकामस्य श्रीणीयाद्वृष्टिंमेवावं रुन्द्धे यदिं ताजक्प्र
स्कन्देद्वर्षुकः पर्जन्यः स्याद्यदिं चिरमवंर्षुको न सादयत्यसंन्नाद्धि प्रजाः
प्रजायंन्ते नानु वषंट्करोति यदंनुवषट्कुर्याद्रुद्रम्प्रजा अन्ववंसृजेन्न
हुत्वान्वींक्षेत यदन्वीक्षेत चक्षुंरस्य प्रमायुंकँ स्यात्तस्मान्नान्वीक्ष्यंः ॥६॥

अन्तर्यामपात्रेणं सावित्रमाग्रयणाद्गृह्णाति प्रजापंतिर्वा एष यदाग्रयणः
प्रजानाम्प्रजननाय न सादयत्यसंन्नाद्धि प्रजाः प्रजायंन्ते नानु वषंट्करोति

यदनुवषट्कुर्याद्रुद्रम्प्रजा अन्ववसृजेदेष वै गायत्रो देवानां यत्सवितैष गायत्रियै लोके गृह्यते यदाग्रयणो यदन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति स्वादेवैनं योनेर्निर्गृह्णाति विश्वे देवास्तृतीयँ सवनं नोदयच्छन्ते सवितारम्प्रातःसवनभागँ सन्तं तृतीयसवनमभि पर्यणयन्ततो वै ते तृतीयँ सवनमुदयच्छन्यत्तृतीयसवने सावित्रो गृह्यते तृतीयस्य सवनस्योद्यत्यै सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः सविता प्रसवानामीशे यत्सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सवितृप्रसूत एवास्मै प्रजाः प्र जनयति सोमे सोममभि गृह्णाति रेत एव तद्दधाति सुशर्मासि सुप्रतिष्ठान इत्याह सोमे हि सोममभिगृह्णाति प्रतिष्ठित्या एतस्मिन्वा अपि ग्रहे मनुष्येभ्यो देवेभ्यः पितृभ्यः क्रियते सुशर्मासि सुप्रतिष्ठान इत्याह मनुष्येभ्य एवैतेन करोति बृहदित्याह देवेभ्य एवैतेन करोति नम इत्याह पितृभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनँ सर्वाभ्यो गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येषः ॥७॥

प्राणो वा एष यदुपाँशुर्यदुपाँशुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्येते प्राणमेवानु प्रयन्ति प्राणमनूद्यन्ति प्रजापतिर्वा एष यदाग्रयणः प्राण उपाँशुः पत्नीः प्रजाः प्र जनयन्ति यदुपाँशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति प्रजानाम्प्रजननाय तस्मात्प्राणम्प्रजा अनु प्र जायन्ते देवा वा इतइतः पत्नीः सुवर्गं लोकमजिगाँसन्ते सुवर्गं लोकं न प्राजानन्त एतम्पात्नीवतमपश्यन्तमगृह्णत ततो वै ते सुवर्गं लोकम्प्राजानन्यत्पात्नीवतो गृह्यते सुवर्गस्य लोकस्य प्रज्ञात्यै स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणस्तं घृतं वज्रं कृत्वाघ्नन्तं

निरिन्द्रियम्भूतमगृह्णन्तस्मात्स्त्रियो निरिन्द्रिया अदायादीरपि पापात्पुꣳस उपस्तितरं वदन्ति यद्धृतेन पात्नीवतꣳ श्रीणाति वज्रेणैवैनं वशे कृत्वा गृह्णात्यु पयामगृहीतोऽसीत्याहेयं वा उपयामस्तस्मादिमाम्प्रजा अनु प्र जायन्ते बृहस्पतिसुतस्य त इत्याह ब्रह्म वै देवानाम्बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयती न्दो इत्याह रेतो वा इन्दू रेत एव तद्दधाती न्द्रियाव इत्याह प्रजा वा इन्द्रियं प्रजा एवास्मै प्र जनयत्य ग्ना३ इत्याहाग्निर्वै रेतोधाः पत्नीव इत्याह मिथुनत्वाय सजूर्देवेन त्वष्ट्रा सोमम्पिबेत्याह त्वष्टा वै पशूनाम्मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति देवा वै त्वष्टारमजिघाꣳसन्त्स पत्नीः प्रापद्यत तं न प्रति प्रायच्छन्तस्मादपि वध्यम्प्रपन्नं न प्रति प्र यच्छन्ति तस्मात्पात्नीवते त्वष्ट्रेऽपि गृह्यते न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रम्प्रजा अन्ववसृजेद्यन्नानुवषट्कुर्यादशान्तमग्नीत्सोमम्भक्षयेदुपाꣳश्वनु वषट्करोति न रुद्रम्प्रजा अन्ववसृजति शान्तमग्नीत्सोमम्भक्षयत्य ग्नीन्नेष्टुरुपस्थमा सीद नेष्टः पत्नीमुदानयेत्याहाग्नीदेव नेष्टरि रेतो दधाति नेष्टा पत्निया मुद्गात्रा सं ख्यापयति प्रजापतिर्वा एष यदुद्गाता प्रजानाम्प्रजननाया प उप प्र वर्तयति रेत एव तत्सिञ्चत्यू रुणोप प्र वर्तयत्यूरुणा हि रेतः सिच्यते नग्नंक्रियोरुमुप प्र वर्तयति यदा हि नग्न ऊरुर्भवत्यथ मिथुनी भवतोऽथ रेतः सिच्यतेऽथ प्रजाः प्र जायन्ते ॥८॥

इन्द्रो वृत्रमहन्तस्य शीर्षकपालमुदौब्जत्स द्रोणकलशोऽभवत्तस्मात्सोमः समस्रवत्स हारियोजनोऽभवत्तं व्यचिकित्सज्जुहवानी३ मा हौषा३मिति सोऽमन्यत यद्धोष्याम्यामꣳ होष्यामि यन्न होष्यामि यज्ञवेशसं

करिष्यामीति तमध्रियत होतुꣳ सोऽग्निरब्रवीन्न मय्यामꣳ हौष्यसीति तं धानाभिरश्रीणात्तꣳ शृतम्भूतमजुहोद्यद्धानाभिर्हारियोजनꣳ श्रीणाति शृतत्वाय शृतमेवैनम्भूतं जुहोति बह्वीभिः श्रीणात्येतावतीरेवास्यामुष्मिँल्लोके कामदुघा भवन्त्यथो खल्वाहुरेता वा इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति तस्माद्बह्वीभिः श्रीणीया दृक्सामे वा इन्द्रस्य हरी सोमपानौ तयोः परिधय आधानं यदप्रहृत्य परिधीञ्जुहुयादन्तराधानाभ्यां घासम्प्र यच्छेत्प्रहृत्य परिधीञ्जुहोति निराधानाभ्यामेव घासम्प्र यच्छत्यु न्नेता जुहोति यातयामेव ह्येतर्ह्यध्वर्युः स्वगाकृतो यदध्वर्युर्जुहुयाद्यथा विमुक्तम्पुनर्युनक्ति तादृगेव त च्छीर्षन्नधि निधाय जुहोति शीर्षतो हि स समभव द्विक्रम्य जुहोति विक्रम्य हीन्द्रो वृत्रमहन्त्समृद्ध्यै पशवो वै हारियोजनीर्यत्सम्भिन्द्यादल्पा एनम्पशवो भुञ्जन्त उप तिष्ठेरन्यन्न सम्भिन्द्याद्बहव एनम्पशवोऽभुञ्जन्त उप तिष्ठेरन्मनसा सम्बाधत उभयं करोति बहव एवैनम्पशवो भुञ्जन्त उप तिष्ठन्त उन्नेतर्युपहवमिच्छन्ते य एव तत्र सोमपीथस्तमेवाव रुन्धत उत्तरवेद्यां नि वपति पशवो वा उत्तरवेदिः पशवो हारियोजनीः पशुष्वेव पशून्प्रति ष्ठापयन्ति ॥६॥

ग्रहान्वा अनु प्रजाः पशवः प्र जायन्त उपाꣳश्वन्तर्यामावजावयः शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रहं गाव आदित्यग्रहो भूयिष्ठाभिर्ऋग्भिर्गृह्यते तस्माद्गावः पशूनाम्भूयिष्ठा यत्त्रिरुपाꣳशूꣳ हस्तेन विगृह्णाति तस्माद्द्वौ त्रीनजा जनयत्य थावयो भूयसीः पिता वा एष यदाग्रयणः पुत्रः कलशो यदाग्रयण उपदस्येत्कलशाद्गृह्णीयाद्यथा पिता पुत्रं क्षित उपधावति तादृगेव त द्यत्कलश उपदस्येदाग्रयणाद्गृह्णीयाद्यथा

पुत्रः पितरं ह्वित उपधावति तादृगेव त दात्मा वा एष यज्ञस्य यदाग्रयणो यद्ग्रहो वा कलशो वोपदस्यैदाग्रयणादृह्णीयादात्मन एवाधि यज्ञं निष्करोत्य विज्ञातो वा एष गृह्यते यदाग्रयणः स्थाल्या गृह्णाति वायव्येन जुहोति तस्माद्गर्भेणाविज्ञातेन ब्रह्महावभृथमव यन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात्स्त्रियं जातामपरास्यन्त्युत्पुमाँसँ हरन्ति यत्पुरोरुचमाह यथा वस्यस आहरति तादृगेव तद्ग्रहं गृह्णाति यथा वस्यस आहृत्य प्राह तादृगेव तद्यत्सादयति यथा वस्यस उपनिधायापक्रामति तादृगेव तद्यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढं पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचा यज्ञस्य धृत्यै ॥१०॥

प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्तेऽमुमेव तैर्लोकमभि जयति पराङिव ह्यसौ लोको यानि पुनः प्रयुज्यन्त इममेव तैर्लोकमभि जयति पुनःपुनरिव ह्ययं लोकः प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वोषधयः परा भवन्ति यानि पुनः प्रयुज्यन्ते तान्यन्वोषधयः पुनरा भवन्ति प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वारण्याः पशवोऽरण्यमप यन्ति यानि पुनः प्रयुज्यन्ते तान्यनु ग्राम्याः पशवो ग्राममुपावयन्ति यो वै ग्रहाणां निदानं वेद निदानवान्भवत्याज्यमित्युक्थं तद्वै ग्रहाणां निदानं यदुपाँशु शँसति तदुपाँश्वन्तर्यामयोर्यदुच्चैस्तदितरेषां ग्रहाणामेतद्वै ग्रहाणां निदानं य एवं वेद निदानवान्भवति यो वै ग्रहाणाम्मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्य एतद्वै ग्रहाणाम्मिथुनं य एवं वेद प्र प्रजया पशुभिर्मिथुनैर्जायत इन्द्रस्त्वष्टुः

सोम॑मभी॒षहा॑पिब॒त्स विष्व॒ङ्व्या॑र्च्छ॒त्स आ॒त्मन्ना॒रम॑ण॒ं नावि॑न्द॒त्स ए॒ताननु॑सव॒नम्पु॑रो॒डाशा॑नपश्य॒त्तान्निर॑वप॒त्तैर्वै स आ॒त्मन्ना॒रम॑णमकुरुत॒ तस्मा॑दनुसव॒नम्पु॑रो॒डाशा॒ निरु॑प्यन्ते॒ तस्मा॑दनुसव॒नम्पु॑रो॒डाशा॑ना॒म्प्राश्नी॑याद॒ात्मन्ने॒वारम॑णं कुरु॒ते नैन॒ꣳ सोमोऽति॑ पवते ब्रह्मवा॒दिनो॑ वदन्ति॒ नर्चा न यजु॑षा प॒ङ्क्तिरा॑प्य॒तेऽथ किं य॒ज्ञस्य॑ पाङ्क्॒त्वमिति॑ धा॒नाः क॑र॒म्भः प॑रिवा॒पः पु॑रो॒डाशः॑ पय॒स्या॑ तेन॑ प॒ङ्क्तिरा॑प्यते॒ तद्य॒ज्ञस्य॑ पाङ्क्॒त्वम् ॥११॥

इति षष्ठकाण्डे पञ्चमः प्रपाठकः ५

अथ षष्ठकाण्डे षष्ठः प्रपाठकः ६

सु॒वर्गाय॒ वा ए॒तानि॑ लो॒काय॑ हूयन्ते॒ यद्दा॑क्षिणानि॒ द्वाभ्या॒ं गार्ह॑पत्ये जुहोति द्वि॒पाद्यज॑मानः प्रति॑ष्ठित्या॒ आग्नी॑ध्रे जुहोत्य॒न्तरि॑क्ष ए॒वा क्र॑मते॒ सदो॒ऽभ्यैति॑ सु॒व॒र्गमे॒वैनं॑ लो॒कं ग॑मयति सौ॒रीभ्यामृ॒ग्भ्यां गार्ह॑पत्ये जुहोत्य॒मुमे॒वैनं॑ लो॒कꣳ स॒मारो॑हयति॒ नय॑वत्य॒र्चाग्नी॑ध्रे जुहोति सु॒व॒र्गस्य॑ लो॒कस्या॒भिनी॑त्यै॒ दिवं॑ गच्छ॒ सुवः॑ प॒तेति॒ हिर॑ण्यꣳ हु॒त्वोद्गृ॑ह्णाति सु॒व॒र्गमे॒वैनं॑ लो॒कं ग॑मयति रू॒पेण॑ वो रू॒पम॒भ्यैमीत्या॑ह रू॒पेण॒ ह्या॑साꣳ रू॒पम॒भ्यैति॒ यद्धिर॑ण्येन तु॒थो वो॑ वि॒श्ववे॑दा॒ वि भ॑ज॒त्वित्या॑ह तु॒थो ह॑ स्म॒ वै वि॒श्ववे॑दा दे॒वाना॒ं दक्षि॑णा वि भ॑जति॒ तेनै॒वैना॒ वि भ॑जत्ये॒ तत्ते॑ अग्ने॒ राध॒ ऐति॒ सोम॑च्युत॒मित्या॑ह॒ सोम॑च्युत॒ꣳ ह्य॑स्य॒ राध॒ ऐति॒ तन्मि॒त्रस्य॑ प॒था न॒येत्या॑ह॒ शान्त्या॑ ऋ॒तस्य॑ प॒था प्रेत॑ च॒न्द्रद॑क्षिणा॒ इत्या॑ह स॒त्यं वा ऋ॒तꣳ स॒त्येनै॒वैना॑ ऋ॒तेन॒ वि भ॑जति य॒ज्ञस्य॑ प॒था सु॑वि॒ता नय॑न्ती॒रित्या॑ह य॒ज्ञस्य॒ ह्ये॑ताः प॒था यन्ति॒ यद्दक्षि॑णा ब्रा॒ह्म॒णम॒द्य रा॑ध्यास॒मृषि॑मार्षे॒यमित्या॑है॒ष वै ब्रा॑ह्म॒ण ऋषि॑रार्षे॒यो यः शु॑श्रु॒वान्तस्मा॑दे॒वमा॑ह॒ वि सुव॒ः पश्य॒

व्यन्तरिक्षमित्याह सुवर्गमेवैनं लोकं गमयति यतस्व सदस्यैरित्याह मित्रत्वायाऽस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्र दातारमा विशतेत्याह वयमिह प्रदातारः स्मोऽस्मानमुत्र मधुमतीरा विशतेति वावैतदाह हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिरिव पुरस्ताद्धत्ते सुवर्गस्य लकस्यानुख्यात्या अग्नीधे ददात्यग्निमुखानेवर्तून्प्रीणाति ब्रह्मणे ददाति प्रसूत्यै होत्रे ददात्यात्मा वा एष यज्ञस्य यद्धोतात्मानमेव यज्ञस्य दक्षिणाभिः समर्धयति ॥१॥

समिष्टयजूꣳषि जुहोति यज्ञस्य समिष्टयै यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापि करोति तदेव तैः प्रीणाति नव जुहोति नव वै पुरुषे प्राणाः पुरुषेण यज्ञः सम्मितो यावानेव यज्ञस्तम्प्रीणाति षडृग्मियाणि जुहोति षड्वा ऋतव ऋतूनेव प्रीणाति त्रीणि यजूꣳषि त्रय इमे लोका इमानेव लोकान्प्रीणाति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेत्याह यज्ञपतिमेवैनं गमयति स्वाम्योनिं गच्छेत्याह स्वामेवैनं योनिं गमयत्येष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीर इत्याह यजमाम एव वीर्यं दधाति वासिष्ठो ह सात्यहव्यो देवभागम्पप्रच्छ यत्सृञ्जयान्बहुयाजिनोऽयीयजो यज्ञे यज्ञम्प्रत्यतिष्ठिपा३ यज्ञपता३विति स होवाच यज्ञपताविति सत्याद्वै सृञ्जयाः परा बभूवुरिति होवाच यज्ञे वाव यज्ञः प्रतिष्ठाप्य आसीद्यजमानस्यापराभावायेति देवा गातुविदो गातुं वित्त्वा गातुमितेत्याह यज्ञ एव यज्ञम्प्रति ष्ठापयति यजमानस्यापराभावाय ॥२॥

अवभृथयजꣳषि जुहोति यदेवार्वाचीनमेकहायनादेनः करोति तदेव तैरव

यजतेऽपोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमव यजते वर्त्मना
वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति साम्नां प्रस्तोतान्ववैति साम
वै रक्षोहा रक्षसामपहत्यै त्रिर्निधनमुपैति त्रय इमे लोका एभ्य एव
लोकेभ्यो रक्षाꣳस्यप हन्ति पुरुषःपुरुषो निधनमुपैति पुरुषःपुरुषो हि
रक्षस्वी रक्षसामपहत्या उरुꣳ हि राजा वरुणश्चकारेत्याह प्रतिष्ठित्यै शतं
ते राजन्भिषजः सहस्रमित्याह भेषजमेवास्मै करोत्यभिष्ठितो वरुणस्य
पाश इत्याह वरुणपाशमेवाभि तिष्ठति बर्हिरभि
जुहोत्याहुतीनाम्प्रतिष्ठित्या अथो अग्निवत्येव जुहोत्य पबर्हिषः
प्रयाजान्यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्चत्या ज्यभागौ
यजति यज्ञस्यैव चक्षुषी नान्तरेति वरुणं यजति
वरुणपाशादेवैनम्मुञ्चत्य ग्नीवरुणौ यजति साक्षादेवैनं
वरुणपाशान्मुञ्चत्य पबर्हिषावनूयाजौ यजति प्रजा वै बर्हिः प्रजा एव
वरुणपाशान्मुञ्चति चतुरः प्रयाजान्यजति द्वावनूयाजौ षट्सम्पद्यन्ते षड्वा
ऋतव ऋतुष्वेव प्रति तिष्ठत्य वभृथ निचङ्कुणेत्याह यथोदितमेव
वरुणमव यजते समुद्रे ते हृदयमप्स्वन्तरित्याह समुद्रे ह्यन्तर्वरुणः सं त्वा
विशन्त्वोषधीरुताप इत्याहाद्भिरेवैनमोषधीभिः सम्यञ्चं दधाति देवीराप
एष वो गर्भ इत्याह यथायजुरेवैतत्पशवो वै सोमो
यद्भिन्दूनाम्भक्षयेत्पशुमान्त्स्याद्वरुणस्त्वेनं गृह्णीयाद्यन्न भक्षयेदपशुः स्यान्नैनं
वरुणो गृह्णीयादुपस्पृश्यमेव पशुमान्भवति नैनं वरुणो गृह्णाति प्रतियुतो
वरुणस्य पाश इत्याह वरुणपाशादेव निर्मुच्यतेऽप्रतीक्षमा यन्ति
वरुणस्यान्तर्हित्या एधोऽस्येधिषीमहीत्याह समिधैवाग्निं नमस्यन्त
उपायन्ति तेजोऽसि तेजो मयि धेहीत्याह तेज एवात्मन्धत्ते ॥३॥

स्फ्येन वेदिमुद्धन्ति रथाक्षेण वि मिमीते यूपम्मिनोति त्रिवृतमेव वज्रँ सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्यै यदन्तर्वेदि मिनुयाद्देवलोकमभि जयेद्यद्बहिर्वेदि मनुष्यलोकं वेद्यन्तस्य संधौ मिनोत्युभयोर्लोकयोरभिजित्या उपरसम्मिताम्मिनुयात्पितृलोककामस्य रशनसम्मिताम्मनुष्यलोककामस्य चषालसम्मितामिन्द्रियकामस्य सर्वान्त्समान्प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान्पशुकामस्यै तान्वा अनु पशव उप तिष्ठन्ते पशुमानेव भवति व्यतिषजेदितरान्प्रजयैवैनम्पशुभिर्व्यतिषजति यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाँसमेषा वै गर्तमिद्यस्यैवम्मिनोति ताजक्प्र मीयते दक्षिणार्ध्यं वर्षिष्ठम्मिनुयात्सुवर्गकामस्याथ ह्रसीयाँसमाक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकाँ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत्स्त्र्येवास्य जायते यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्र वेष्टयेत्पुमानेवास्य जायतेऽसुरा वै देवान्दक्षिणत उपानयन्तान्देवा उपशयेनैवापानुदन्त तदुपशयस्योपशयत्वं यद्दक्षिणत उपशय उपशये भ्रातृव्यापनुत्त्यै सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुस्तस्य यजमानः पशुर्यन्न निर्दिशेदार्तिमार्च्छेद्यजमानोऽसौ ते पशुरिति निर्दिशेद्यं द्विष्याद्यमेव द्वेष्टि तमस्मै पशुं निर्दिशति यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्यान्पशून्हिनस्ति नारण्यान्प्रजापतिः प्रजा असृजत सोऽन्नाद्येन व्यार्ध्यत स एतामेकादशिनीमपश्यत्तया वै सोऽन्नाद्यमवारुन्द्ध यद्दश यूपा भवन्ति दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्द्धे य एकादशः

स्तनं एवास्यै स दुह एवैनां तेन वज्रो वा एषा सम्मीयते यदेकादशिनी सेश्वरा पुरस्तात्प्रत्यञ्चं यज्ञँ सम्मर्दितोर्यत्पात्नीवतम्मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय ॥४॥

प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एतामेकादशिनीमपश्यत्तया वै स आयुरिन्द्रियं वीर्यमात्मन्नधत्त प्रजा इव खलु वा एष सृजते यो यजते स एतर्हि रिरिचान इव यदेषैकादशिनी भवत्यायुरेव तयेन्द्रियं वीर्यं यजमान आत्मन्धत्ते प्रैवाग्नेयेन वापयति मिथुनँ सारस्वत्या करोति रेतः सौम्येन दधाति प्र जनयति पौष्णेन बार्हस्पत्यो भवति ब्रह्म वै देवानाम्बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयति वैश्वदेवो भवति वैश्वदेव्यो वै प्रजाः प्रजा एवास्मै प्र जनयतीन्द्रियमेवैन्द्रेणाव रुन्द्धे विशम्मारुतेनौजो बलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणो मध्यत ऐन्द्रमा लभते मध्यत एवेन्द्रियं यजमाने दधाति पुरस्तादैन्द्रस्य वैश्वदेवमा लभते वैश्वदेवं वा अन्नमन्नमेव पुरस्ताद्धत्ते तस्मात्पुरस्तादन्नमद्यत ऐन्द्रमालभ्य मारुतमा लभते विड्वै मरुतो विशमेवास्मा अनु बध्नाति यदि कामयेत योऽवगतः सोऽप रुध्यतां योऽपरुद्धः सोऽव गच्छत्वित्यैन्द्रस्य लोके वारुणमा लभेत वारुणस्य लोक ऐन्द्रं य एवावगतः सोऽप रुध्यते योऽपरुद्धः सोऽव गच्छति यदि कामयेत प्रजा मुह्येयुरिति पशून्व्यतिषजेत्प्रजा एव मोहयति यदभिवाहतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमा लभतेऽपवाहतोऽपाम्प्रजानामवरुणग्राहाय ॥५॥

इन्द्रः पत्निया मनुमयाजयत्ताम्पर्यग्निकृतामुदसृजत्तया

